मठग्रामे कुशस्थल्यां कर्दलीनाम्नि तत्पुरे । तत्र देवा महाश्रेष्ठास्त्रिहोत्रपुरवासिनः ॥ ५१ ॥
आनीता भार्गवेणैव गोमंताख्ये च पर्वते । मांगिरीशो महादेवो महालक्ष्मीश्च म्हालसा ॥५२॥
शांतादुर्गा च नागेशः सप्तकोटीश्वरः शुभः । तथा च बहुला देवा आनीताः[1] भार्गवेण च ॥५३॥
स्थापिता भक्तकार्यार्थं तत्रैव च शुभस्थले । इतिहासं मया प्रोक्तं सर्वधर्मपरायणम् ॥ ५४ ॥
शृण्वतां पदमात्रेण गंगास्नानफलं लभेत् ।

इति श्रीस्कन्दपुराणे उत्तररहस्ये सह्याद्रिखण्डे स्कन्देश्वरसंवादे चित्पावनब्राह्मणोत्पत्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ भार्गवेण तु आनीताः ।

भारद्वाज, कौशिक, वत्स, कौण्डिन्य, कश्यप, वसिष्ठ, जमदग्नि, विश्वामित्र, गौतम व अत्रि ह्या दहा ऋषींची श्राद्ध, यज्ञ व भोजन यासाठीं मठग्राम, कुशस्थल, कर्दलीनगर (केळोशी) येथें स्थापना करून गोमंत पर्वतावर त्रिहोत्रपुरांतील प्रमुख देव मांगिरीश-महादेव, महालक्ष्मी, म्हालसा, शांतादुर्गा, नागेश, सप्तकोटीश्वर इत्यादि पुष्कळ देवता परशुरामानें आणल्या. ४९-५३.

हा सर्व इतिहास मी तुला सांगितला आहे. यांतील एका शब्दाच्या श्रवणानेंसुद्धां गंगास्नान केल्याचें पुण्य लाभतें. ५४.

# अथ द्वितीयोऽध्यायः ।

## काराष्ट्रब्राह्मणोत्पत्तिः ।

स्कन्द उवाच --

महादेव विरूपाक्ष भक्ताभीष्टप्रदायक । कथयस्व महादेव काराष्ट्रब्राह्मणोत्पत्तिम् ॥ १ ॥

महादेव उवाच --

शृणु पुत्र प्रवक्ष्यामि चेतिहासं पुरातनम् । का[1]राष्ट्रो नाम देशोऽस्ति दशयोजनविस्तृतः ॥२॥
वेदवत्याश्चोत्तरे तु कोयनासंगदक्षिणे । काराष्ट्रो नाम देशश्च दुष्टदेशः प्रकीर्तितः ॥ ३ ॥
सर्वे लोकाश्च कठिना दुर्जनाः पापकर्मिणः । तद्देशजाश्च विप्रास्तु काराष्ट्रा इति नामतः ॥४॥
[2]पापकर्ममहानष्टा व्यभिचारसमुद्भवाः । खरस्य ह्यस्थियोगेन रेतः क्षिप्तं विभावकम् ॥ ५ ॥
तेन तेषां समुत्पत्तिर्जाता वै पापकर्मिणाम् । तद्देशे मातृका देवी महादुष्टा कुरूपिणी ॥ ६ ॥
तस्याः पूजा यदाब्दे च ब्राह्मणो दीयते बलिः । ते पंक्तिगोत्रजा नष्टा ब्रह्महत्यां करोति च ॥७॥
न कृता येन सा हत्या कुलं तस्य क्षयं व्रजेत् । एवं पुरा तया देव्या वरो दत्तो द्विजान् किल
तेषां संसर्गमात्रेण सचैलं स्नानमाचरेत् । तेषां देशांतरे वायुर्न ग्राह्यो योजनत्रयम् ॥ ९ ॥
केवलं विषमाप्नोति पातकं ह्यतिदुस्तरम् ।

स्कन्द उवाच --

किं गोत्रं च कथं जाताः किं नामग्रहणादपि ॥ १० ॥
कथयस्व महादेव सर्वमेव यथास्थितम् ।

ईश्वर उवाच --

पुरीशमत्रिगोत्रं च कौशिकं वत्सहारितम् ॥ ११ ॥
शांडिल्यं चैव मांडव्यं देवराजः सुदर्शनः । एवं च ऋषिप्राप्तानि गोत्राणि त्वनुग्रहात् ॥ १२ ॥
संवत्सरे महानीचो ब्रह्महत्यां करोति यः । सर्वकर्मबहिश्चैव सर्वधर्मबहिष्कृतः ॥ १३ ॥
सर्वे ते नगराद्बाह्यास्तेषां स्पर्शं न कारयेत् । तस्या देव्याःकृतो यज्ञः सर्वत्र विजयप्रदः ॥१४॥
सा देवी चा[3]ब्रवीद्विप्रान् सर्वसिद्धिं ददामि वः । अब्दे चेद् दीयते मह्यं ब्राह्मणश्च सुलक्षणः ॥१५॥
विशेषतश्च जामाता ह्यथवा भागिनीसुतः । एतन्मध्ये त्रयो विप्राः प[4]द्येयो नामधारकाः ॥ १६ ॥
पदमात्रं तु गायत्रीपारगाः कोंकणे स्थिताः । सह्याद्रिमस्तके भागे योजनानां चतुष्टयम् ॥१७॥
योजनं शतविस्तीर्णं कौंकणमिति नामतः । देशश्च केवलो नष्टश्चांडालजनसेवितः ॥ १८ ॥
तत्रैव वासकाराश्च पद्मयो ब्राह्मणाः खलु । श्राद्धे वा मौंजिकर्मणि मांगल्ये वा सुकर्मसु ॥१९॥*
आगताः पद्मयो विप्राः कार्यनाशो न संशयः । वर्जयेत्सर्वकार्येषु सर्वधर्मविवर्जितम् ॥ २० ॥

---

१ कराढा २ पापं कर्मतो नष्टा । ३ देवीत्थं यवी ४ पद्मयोर् ।

* रॉ. ए. सो. कलकत्ता, लिखित १०१०४ यांत खर + अस्थि विषयक कथा अधिक आहे. ती येथे घेतली नाही. तिची श्लोकसंख्या २६ आहे.

चांडालो ब्राह्मणश्चैव न ग्राह्यं तस्य वै जलम् । इति कोंकणजा विप्रा दुष्टदेशसमुद्भवाः ॥ २१ ॥
कुचैलाचारहीनांस्तान् सर्वकार्येषु वर्जयेत् । उत्तमं चैव ब्राह्मण्यं मध्यदेशादयस्तथा ॥ २२ ॥
नर्मदादक्षिणे तीरे कृष्णा चैव तथोत्तरे । तन्मध्ये च समाना स्यात्तुंगभद्रा त्वथोत्तरे ॥ २३ ॥
ततः सर्वो यथादेशो नात्र कार्या विचारणा । योजना दश हे पुत्र काराष्ट्रो देशदुर्धरः ॥ २४ ॥
तन्मध्ये पंचक्रोशं च काश्या[1] यत्राधिकं भुवि । क्षेत्रं वै करवीराख्यं क्षेत्रं लक्ष्मीविनिर्मितम् ॥२५
तत्क्षेत्रं हि महापुण्यं दर्शनात्पापनाशनम् । तत्क्षेत्रे ऋषयः सर्वे ब्राह्मणा वेदपारगाः ॥ २६ ॥
तेषां दर्शनमात्रेण सर्वपापक्षयो भवेत् । तत्क्षेत्रं केवलं पीठं महालक्ष्म्याश्च तत्त्वतः ॥ २७ ॥
केवलैकै[2]विलासश्च महालक्ष्म्याः प्रसादतः । ह्यानीता तत्र वै देवी विश्वेश्वरजगत्प्रभुः ॥ २८ ॥
अष्टषड्यानि तीर्थानि माता भगवती शुभा[3]। तत्र स्थानं गतः साधुः स्नात्वा पीत्वा च तज्जलम् ॥
ब्रह्महत्यादि पापं च नाशमाप्नोति निश्चितम् । नानाविधाश्च दिव्याश्च तिष्ठन्ति तत्र देवताः ॥३०
मर्त्यलोके[4] महासेन कैलासं च पुरं शृणु । तत्र रुद्रगयां पुत्र कुर्वन्ति श्राद्धतर्पणम् ॥ ३१ ॥
एतस्य पितरः सर्वे ह्युद्धरन्ति न संशयः। तस्याप्युत्तरभागे तु रामकुंडं व्यवस्थितम् ॥३२ ॥
तस्य दर्शनमात्रेण सर्वपापक्षयो भवेत् ।

इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखण्डे शूर्पारकक्षेत्रमाहात्म्यं च ब्राह्मणोत्पत्तिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

---

१ काशाद्यत्राधिकं । २ केवलैक्य । ३ सह । ४ महर्लोके महाशेन कविलासपुरं ।

# अथ तृतीयोऽध्यायः ।

## गोमांचलक्षेत्रमाहात्म्यम् ।

स्कन्द उवाच –

तदुपरि च स्कंदस्तु पुनः पृच्छां करोति च[१] । मांगिरीशस्य देवस्य कथं माहात्म्यमुत्तमम् ॥१

ईश्वर उवाच –

शृणु पुत्र प्रवक्ष्यामि कथां श्रेष्ठां पुरातनीम्। मांगिरीशपर्वतो हि पूर्वदेशे त्रिहोत्रके ॥ २ ॥

ब्रह्मणा स्थापितं लिंगं पूर्वं तत्र द्विजोत्तम । मांगीशनाम वै तस्य विख्यातं भुवनत्रये ॥ ३ ॥

स्कन्द उवाच –

कारणं च कथं जातं स्थापित[२]श्च जगद्गुरुः । सत्सर्वं सगुणं ब्रूहि भक्तानां च हिताय वै ॥ ४ ॥

ईश्वर उवाच –

पूर्वं कृतयुगे पुत्र ममाज्ञया विरंचिना । पृथ्वी कर्तृत्वकर्तव्यं सर्वमेवं[३] यथाविधि ॥ ५ ॥

ततो विरंचिना कृत्वा महीं सर्वां यथोचिताम् । सर्वं च ग्रस्तसंभूतं तेन तद्विलयं गतम् ॥

ततो ब्रह्मा सुरश्रेष्ठाः पुनः पृथ्वीं चकार सः । अर्धमन्य[४]र्थसंभूतमर्धं एव परिग्रहः ॥ ७ ॥

पश्चान्ममाज्ञया विष्णुः पुरैव विलयं गतः । ततो विरंचिदेवेन तपः कृत्वा त्रिहोत्रके ॥ ८ ॥

मांगिरीशप्रसादात्तु कर्माधीनं जगत्कृतम् । एतदेव कृतं कर्म तदैवं[५] चैव जायते ॥ ९ ॥

एवं मनोगता पृथ्वी सर्वा एव तु निश्चयम्। पूर्वपुण्यैः[६] पुराविदः कर्म दैवं प्रचक्षते ॥

उद्यमोपार्जितं यथा वांछितं फलते तथा । यथा एकेन चक्रेण रथस्य न गतिर्भवेत् ॥ ११ ॥

विना पुरुषकारेण दैवं चैव न सिध्यति । कर्माधीनं जगत्सर्वं कृत्वा विष्णुर्ममाज्ञया ॥ १२ ॥

एवं निर्माणतां पृथ्वी गता पुत्र यथोचितम् । ब्रह्मणा स्थापितं लिंगं मांगिरीशं महाद्भुतम् ॥

पर्वते सत्कृते तत्र देशत्रिहोत्रपूर्वयोः । स देवो ब्राह्मणानां तु तत्तद्देशाधिपो यदा ॥ १४ ॥

ब्रह्मणा कथितं तेभ्यो भक्तियुक्तेन साधयेत् । एवमाज्ञां शिरो[९] धृत्वा कृत्वा भक्तिं सदाशिवे ॥

तेन मांगिरीशो देवो[१०] यावच्चंद्रो दिवाकरः । ते ऋषिकुलसंभूता ब्राह्मणा दशगोत्रजाः ॥

आनीता भार्गवेणैव शूर्पा[११]रकुशस्थलीम्। तदर्थे ह्यानीता देवा गोमंताख्ये च पर्वते ॥ १७ ॥

एवं पुत्र स[१२]मासेन देवोत्पत्तिश्च जायते । ते देवा वीर्यवंतश्च भक्ताभीष्टप्रदायकाः ॥ १८ ॥

स्मरणाद्धरते विघ्ना[१३]न् सत्यं सत्यं वदाम्यहं । महालक्ष्मीर्महादेवी जगन्माता महालसा ॥१९॥

शांतादुर्गा महामाया नागेशः साग्रदेवताः । एवं च देवताः पुत्र ह्यानीता भार्गवेण तु ॥

---

१ तं । २ स्थापितां । ३ सर्व एव । ४ मनाथ । ५ तदैव चैव । ६ पूर्वपुण्य विभवः । ७ पृथ्वीं शृणु पुत्र । ८ तेषां । ९ शिरे । १० भक्तो । ११ शूर्पारेक । १२ सुखासीनो । १३ विघ्नः ।

# अध्याय ३ रा

## गोमंतकाचें माहात्म्य

मांगिरीश देवाचें माहात्म्य श्रेष्ठ कां, असें स्कंदानें विचारल्यावर शंकर स्कंदास म्हणाले, बाळ, ही एक प्राचीन श्रेष्ठ कथा आहे, ऐक. पूर्वेकडे त्रिहोत्र देशांत मांगिरीश नांवाचा पर्वत होता. त्यावर ब्रह्मदेवानें एक लिंग स्थापन केलें. हें द्विजोत्तमा, तेंच त्रैलोक्यांत मांगीश ह्या नांवानें प्रसिद्ध झालें. १–३.

स्कंदानें पुनः प्रश्न केला, कीं जगद्गुरु, अशा त्या लिंगाची स्थापना कोणत्या कारणानें केली? भक्तांच्या कल्याणासाठीं आपण हें सर्व मला सांगावें. ४.

शंकर म्हणाले, पूर्वी कृतयुगांत माझ्या आज्ञेवरून ब्रह्मदेवानें पृथ्वी, कर्तृत्व, कार्य इत्यादि सर्व कांहीं योग्य प्रकारें निर्माण केलें. ५ पण नाशवंत असें तें सर्व पृथ्वीसह लयास गेलें! म्हणून ब्रह्मदेवानें पुनः सृष्टि निर्माण केली! पण तीही सृष्टि कार्यकारण-भावविरहित असल्यानें पुनः नाश पावली! माझ्या आज्ञेनें विष्णूही अंतर्धान पावले. नंतर ब्रह्मदेवानें त्रिहोत्रदेशांत तपश्चर्या करून मांगिरीशाच्या प्रसादानें कर्माधीन अशी सृष्टि निर्माण केली. प्राणी जे कांहीं करतो तेंच कर्म होय. ६–९. अशा रीतीनें मनोवांछित पृथ्वी उत्पन्न झाली. म्हणून पूर्वजन्मांतील पुण्याईचें वैभव पदरीं असलेले विद्वान् लोक या कर्मालाच दैव असें म्हणतात. १०. रथाला एका चक्रानें गति मिळत नाहीं तद्वत् प्रयत्नावांचून दैवालाही सफलता मिळत नाहीं, हें निश्चित. म्हणून माझ्या आज्ञेवरून विष्णूनें दैवाधीन असें पृथ्वीसह सर्व जग निर्माण केलें. ११–१२. ब्रह्मदेवानें पृथ्वी निर्माण केल्यावर अत्यंत अद्भुत असें मांगिरीश लिंगही स्थापिलें. त्रिहोत्रदेशवासी सर्व लोकांनीं त्या मांगिरीशाची पूजा केली. अशा रीतीनें तो देव सर्व ब्राह्मणांचा व त्या देशाचा अधिपति झाला. १३–१४. ब्रह्मदेवानें त्यांस भक्तियुक्त अंतःकरणानें श्रीमांगिरीशाची भक्ति करण्यास सांगितलें, व त्यांनींही ती आज्ञा शिरोधार्य मानिली. १५. नंतर भार्गवानें याच कुळांतील दशगोत्री ब्राह्मण शूर्पारक-देशांतील कुशस्थलीमध्यें आणिले व त्यांच्यासाठीं गोमंतपर्वतावर अनेक देवही आणिले. १६–१७. या तेजस्वी देवांचें स्मरण केल्यानें मनुष्यांच्या सर्व विघ्नांचा नाश होतो, हें सत्य मी त्रिवार सांगतों. महादेवी महालक्ष्मी, जगन्माता महालसा, महामाया, शांतादुर्गा, श्रीनागेश इत्यादि श्रेष्ठ देवता श्रीभार्गवानेंच आणल्या आहेत. १८–२०.

त्रिहोत्रवासकारीभिर्ब्राह्मणैश्च कृतं पदम् । चंद्रतीर्थं महातीर्थं तीर्थं भास्करनामकम् ॥ २१
पद्मतीर्थं वरेण्यं च वायुतीर्थं तथैव च । मुने गोमांचले तीर्थमिंद्रनामा[1]न्वितं शुभम् ॥ २२
हरिचूडामणिक्षेत्रं महापुण्यकरं स्मृतम् । गंगाया मध्यभागे तु क्षेत्रं द्वीपवती स्मृतम् ॥
क्रोशद्वयं च विस्तीर्णं केवलं पुण्यवर्धनम् । तत्रैव स्थापितं लिंगमृषिभिः सप्तभिर्द्विजाः ॥२४
सप्तकोटीश्वरं नाम भक्तानां पालको हरः । धातुभिः कल्पितं लिंगं रमणीयं सुनिश्चितम् ॥२५
दर्शनाद्धरते पापं स्पर्शनान्मोक्षमाप्नुयात् । यवाधिकं च केदाराद्वीर्यवच्च महाद्भुतम् ॥ २६
भक्तानामिष्टकार्यार्थं स्थापितं पृथिवीतले । प्रत्यक्षो भगवान् रुद्रो वसते तत्र एव हि ॥२७॥
महासेन महाबाहो शृणु कैवल्यदां कथां । पूर्वं तत्र महाश्रेष्ठो ब्राह्मणश्चौद्यनामतः ॥ २८ ॥
तस्य कन्यातिनष्टा च दुष्कृ[2]त्या व्यभिचारिणी । तत्र सर्वैः स्थितैर्विप्रैर्ब्राह्मत्वं चैव दीयते ॥२९॥
वीतरागेण सा नारी वसति[3] स्म शिवालये । तत्रैव गायनं नृत्यं कृत्वा रात्रौ दिवापि च ॥ ३० ॥
संतुष्टश्च महादेवः सर्वेच्छां च ददामि ते । एवं लिंगेऽभवच्छ[4]ब्दः सुप्रसन्नो महेश्वरः ॥ ३१ ॥
ततस्तां पातकीयां च ददौ सायुज्यमुत्तमम् । एवं तस्य वचः श्रुत्वा ज्योतिर्निर्माणतां गतम् ॥
ज्योतिषा ग्रासितं ज्योतिः सायुज्यं निश्चलं पदम् । तत्र स्थाने सुखासीना गीतवाद्यनिरंतरा ॥ ३३ ॥
प्राप्यंते विपुलौ[5] भोगा महादेवप्रसादतः । इतिहासः पुराणोऽयं तवाग्रे कथितो मया[6] ॥ ३४
महापुण्यकरी श्रेष्ठा कथा सर्वत्र दुर्लभा । पदमात्रं पठंति चेत् शृण्वंति च कथोत्तमाम् ॥ ३५
महापुण्यं भवेत्तेषां महारुद्रप्रसादतः ।

इति श्रीस्कन्दपुराणे उत्तररहस्ये सह्याद्रिखण्डे गोमांचलक्षेत्रमाहात्म्यं नाम तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ।

## विविधब्राह्मणोत्पत्तिः ।

स्कन्द उवाच –
विश्वेश्वर जगन्नाथ त्रैलोक्याधिमहेश्वर । भूतं भव्यं भविष्यं च सर्गस्थित्यंतकारकम् ॥ १ ॥
कथां सर्वजगन्नाथ श्रुत्वाहं त्वत्प्रसादतः । दश गोत्रकरा विप्रास्त्रिहोत्रस्थलवासिनः ॥ २ ॥
आनीता भार्गवेणैव स्वकथार्थस्य हेतवे । उत्पत्तिं वद हे शंभो तेषां चैव समासतः ॥ ३ ॥
ईश्वर उवाच –
शृणु पुत्र प्रवक्ष्यामि को योगः च कथं स्थितिः । ब्राह्मणा दशगोत्राश्च कुलं षट्षष्टिकं स्मृतम् ॥४
कुशस्थल्यां च कर्दल्यां त्रिगोत्रं स्थापितं खलु । कौशिकं[7] वत्सं कौंडिन्यं गोत्रं दशकुलान्वितम् ॥
एते त्रिगोत्रजा विप्रा उत्तमा राजपूजिताः । सुदर्शनाः सदाचाराश्चतुराः सर्वकर्मसु ॥ ६ ॥

---

१ नामानिकं । २ दुष्कर्मा । ३ वसति च । ४ भवेच्छब्दः । ५ विपुलान् भोगान् ।
६ इतिहासपुरातन्यं तवाग्रे कथितं । ७ कौत्सं वत्सं च

त्रिहोत्रवासी ब्राह्मण गोमांचलावरील महातीर्थ चंद्रतीर्थ, भास्करतीर्थ, पद्मतीर्थ, हिरण्यतीर्थ, वायुतीर्थ, इंद्रतीर्थ, हरिचूडामणिक्षेत्र या ठिकाणीं राहिले. २१–२२. गंगेच्या मध्यभागीं असलेल्या दोन कोस विस्तीर्ण व पवित्र अशा दीपवती क्षेत्रांत सप्तऋषींनीं सप्तकोटीश्वरलिंगाची स्थापना केली. २३–२४. हें सप्तकोटीश्वर लिंग म्हणजे भक्तांचें पालन करणारा प्रत्यक्ष शंकर होय. धातुनिर्मित अशा ह्या रमणीय लिंगाच्या दर्शनानें सर्वपापक्षय होऊन मनुष्याला मुक्तिलाभ होतो. हें स्थान केदारक्षेत्राहून कांकणभर (एका यवानें) अधिक प्रभावी आहे. कारण केवळ भक्तांचें कल्याण करण्यासाठींच याची स्थापना झाली असून येथें प्रत्यक्ष भगवान रुद्र राहतात. २५–२७. हे बाहुशाली महासेना, तुला मी एक प्राचीन ज्ञानदायक कथा सांगतों, ऐक —

पूर्वी चैत्र नांवाचा एक ब्राह्मण होता. त्याला दुराचारी व्यभिचारिणी अशी एक कन्या होती. म्हणून सर्व ब्राह्मणांनीं तिला वाळींत टाकलें. २८–२९. त्यामुळें विरक्त होऊन ती शिवालयांत येऊन रात्रंदिवस भक्तिपूर्वक नृत्यगायन करूं लागली. ३०. तिच्या भक्तीनें शंकर तिच्यावर प्रसन्न झाले व एकाएकीं त्या लिंगांत शब्द उमटला, कीं मी तुझ्या कामना पूर्ण करतों. ३१. लगेच त्या लिंगांतून निघालेल्या ज्योतीनें त्या कन्येला सायुज्य मुक्ति दिली. एका तेजांत दुसरें तेज विलीन झालें! जे कोणी सुवासीन भक्त ईश्वराची गीतवाद्यपूर्वक निरंतर सेवा करतील, त्यांना महादेवाच्या कृपेनें विपुल वैभव प्राप्त होतें. असा हा प्राचीन इतिहास मी तुला सांगितला आहे. ३२–३४. हा पुण्यकारक श्रेष्ठ इतिहास जे कोणी थोडातरी ऐकतील त्यांना महारुद्राच्या कृपेनें महापुण्य प्राप्त होईल. ३५.

## अध्याय ४ था

## विविध ब्राह्मणांची उत्पत्ति

स्कंद म्हणाला, हे विश्वेश्वरा, सर्व जगाचे तुम्ही त्रिकालज्ञ स्वामी आहांत. तुम्ही जगाची उत्पत्ति, रक्षण व प्रलय करणारे आहांत. तुमच्या कृपेनें त्रिहोत्रपुरवासी दशगोत्री ब्राह्मणांची कथा मी ऐकली. भार्गवानें आपल्या कार्यसिद्धीसाठीं गोमंचल क्षेत्रांत त्यांची स्थापना कोठें केली व पुढें त्यांचा विस्तार कसा झाला, हें थोडक्यांत सांगा. १–३.

ईश्वर म्हणाले – बाळा, त्या ब्राह्मणांचा योगक्षेम भार्गवानें कशा प्रकारें केला, हें मी आतां सांगतों, ऐक—

त्या दशगोत्री ब्राह्मणांचीं एकंदर ६६ कुळें होतीं. त्यापैकीं कौशिक, वत्स व कौंडिण्य या तीन गोत्री दहा कुळांची स्थापना कुशस्थली व केळशी येथें केली. ४–५. श्रेष्ठ व राजमान्य असे हे त्रिगोत्री ब्राह्मण दिसण्यांत सुंदर व सदाचारी असून सर्व कार्यांत निष्णात होते. ६.

लोटल्यां च कुशस्थल्यां वरेण्ये मठग्रामके । पट्पडेतेषु ग्रामेषु कुलानि स्थापितानि वै ॥ ७ ॥
चूडामणिमहाक्षेत्रे कुलानि दश एव हि । स्थापितास्तत्र ये देवा भार्गवेण तु यत्नतः ॥ ८ ॥
दीपवत्यामष्टकुलं स्थापितं च यथाविधि । गोमांचले मध्यभागे किर्वंतस्यैव जातिकाः ॥ ९ ॥
द्वादश स्थापिता विप्राः पंचक्रोशेषु मध्यतः । एवं षट्षष्टिका विप्राः स्थापिताश्च परस्परम् ॥१०
कुलं द्वादशकं पुत्र स्थापितं* द्वादशे पुरे । एवं विस्तारिता विप्राःप्रतिलोमश्च कथ्यते ॥११॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैवानुलोमजः । प्रतिलोमाः षट्कषट्कं विस्तारं शृणु मे प्रिये ॥१२
वैश्यायां ब्राह्मणाज्जातो ह्यंबष्ठ इति नामतः । क्षत्रियायां च वैश्यात्तु जातो मागध इत्यभूत् ॥१३
अनुलोममिदं भूतं प्रतिलोमसिदं शृणु । ब्राह्मणात्क्षत्रियापुत्र अगरो नाम उच्यते ॥ १४ ॥
रुद्रधर्मादिकं न्यूनं नटभाटादि केवलम् । ब्राह्मण्यां वैश्यसंभूता जाता कैबर्तिका[1] इतिः ॥ १५
व्याधधर्मा महानिष्ठा[2] अंतकायतयः स्मृताः । ब्राह्मण्यां शूद्रसंभूतो जातश्चांडाल एव हि ॥१६
सर्वत्र नगराद्बाह्याः सर्वधर्मबहिष्कृताः । तस्य स्पर्शनमात्रेण सचैलं स्नानमाचरेत् ॥ १७ ॥
न गृहीत्वा तस्य भिक्षां स्पर्शास्पर्शं न कारयेत् ।
पार्वत्युवाच —
गोलकं कुंडगोलं च द्विविधं परिकीर्तितम् ॥ १८ ॥
तस्य सर्वस्य चोत्पत्तिं कथयस्व महेश्वर ।
ईश्वर उवाच —
ब्राह्मणी विधवा नारी व्यभिचारेण गुर्विणी ॥ १९ ॥
गोलकस्तस्य पुत्रो वै शूद्रवद्यदिकेवलः । ब्राह्मणस्य यदा पुत्री जाता द्वादशवार्षिकी ॥ २० ॥
अविवाहिता च तस्यां वै जातश्चैवानुगोलकः । ब्राह्मणी विधवा चैव पुनर्विवाहिता कृता ॥२१॥
तत्पुत्रः कुंडगोलश्च सर्वधर्मबहिष्कृतः । स्वपतित्यागिनी नारी निदेशदूरतस्थयोः* ॥ २२ ॥
तस्यां पुत्रो यदा जातो रंडक इति नामतः । अधमाः कुंडगोलाद्याः सर्वे धर्मबहिष्कृताः ॥२३॥
रंडकश्चैव नामाभूत् सर्वत्रैवाप्यपूजकः । यदा गुप्तपरीजातो व्यभिचारस्य संभवः ॥ २४ ॥
वर्णसंकरनामा वै दशगोत्रविनाशकः । संकरो नरकायेति कुलघ्नश्चैव जायते ॥ २५ ॥
पतंति पितरो ह्येषां लुप्तपिंडोदकक्रियाः । तथापि चैव पांचाला मायासनुजकाष्ठतट्* ॥ २६ ॥
शिल्पिकाः स्वर्णकाश्चैव पांचालाश्चेति उच्यते। कुंभकारी च पांचाला यदा प्रतिग्रही द्विजः ॥२७॥
कुलानि दशकं तस्य पतंति नरकेषु वै । नटाश्च रजकाश्चैव बुरुडाश्चर्मकारकाः ॥ २८ ॥
अतिशूद्राश्च चांडालाः स्पर्शनात्स्नानमाचरेत् । ब्राह्मणानां च षट्कर्म क्षत्रियाश्च त्रिकर्मजाः ॥
वैश्याः शूद्राश्च तांत्रीकाः सर्वशास्त्रेषु निर्णयः। तथा वाप्यंत्यजानां तु नास्ति धर्मश्च कर्म च ॥३०॥
इमां पुत्र प्रवक्ष्यामि कथां लोकस्य काम्यया । क्षेत्रिण्यां[3] वैश्यसंभूतो मार्तंड इति नामतः* ॥३१॥
शूद्राश्चै[4] वैश्यनारीणमेते पंचे[5] तु पुल्कसाः । एवं च ज्ञातयः सर्वा द्वीपांते विविधा इति* ॥ ३२ ॥
नवखण्डा सप्तद्वीपा पृथ्वी देशसमाकुला । जंबुद्वीपं शाकद्वीपः शाल्मली प्लक्ष उच्यते ॥ ३३ ॥
कुशः क्रौंचमहाद्वीपः पुष्करीद्वीप उच्यते । सप्तद्वीपा च या पृथ्वी नवखण्डा च जायते ॥३४॥

---

१ वैवर्तिका । २ महानष्ठा ३ क्षत्रियां ४ शूद्राश्च । ५ पंचे तु कुलशः पतिः ।

कोटली, कुशस्थली, वरेण्य व मटग्राम येथें प्रत्येकीं सहा कुळें अशीं चोवीस कुळें भार्गवानें स्थापिलीं. महाक्षेत्र चूडामणि येथें दहा कुळें स्थापिलीं, दीपवती येथें आठ, गोमंचल्याच्या मध्यभागीं बारा व त्याच्या पंचक्रोशींत बारा, अशा रीतीनें एकंदर सहासष्ट कुळांची स्थापना भार्गवानें केली. ह्या सहासष्ट ब्राह्मणकुळांचा विस्तार व प्रतिलोमवंश ईश्वर सांगतो. ७–११.

वस्तुतः ब्राह्मण, क्षत्रिय, वैश्य व शूद्र हे अनुलोमज होत. त्यांची प्रतिलोम संततिसुद्धां सहासष्ट आहे. ब्राह्मणादि पुरुषांपासून क्षत्रियादि स्त्रियांचे ठिकाणीं जन्मलेली संतति अनुलोम व ब्राह्मणादि स्त्रियांचे ठिकाणीं क्षत्रियादिकांपासून झालेली संतति प्रतिलोम होय. ह्या प्रकारांनीं जन्मलेली संतति पुढील नांवानें प्रसिद्ध झाली. अंबष्ठ, मागध, अगर, नट, भाट, कैवर्तिक व चांडाल. १२–१७.

यानंतर पार्वतीनें गोलक व कुंडगोलक यांची माहितीनें विचारल्यावर शंकरांनीं त्यांची माहिती सांगितली. बारा वर्षांची विधवा ब्राह्मणी व्यभिचारानें गरोदर झाल्यास तिचा पुत्र गोलक होय. अविवाहित ब्राह्मणीची संतति अनुगोलक होय. विधवा ब्राह्मणी पुनर्विवाहित होऊन तिला संतति झाल्यास ती संतति कुंडगोलक होय. पति दूरदेशीं गेला असतां झालेल्या व्यभिचारजन्य संततीस रंडक म्हणावें. तसेंच गुप्तपणें व्यभिचारानें झालेल्या संततीस वर्णसंकर हें नांव आहे. हा संकर कुलनाशक असून त्यामुळें नरकलोक मिळतो; कारण त्याचे पितर पिंडप्राप्ति न झाल्यानें नरकांत पडतात. याचप्रमाणें पांचाल, शिल्पिक, काष्ठतट्ट, स्वर्णक, कुंभकार इत्यादि जाति आहेत. जेव्हां ब्राह्मण केवळ लोभी बनतो, तेव्हां त्याचीं दहा कुळें नरकांत पडतात. तसेंच नट, रजक, बुरुड, चर्मकार, अतिशूद्र व चांडाल या जाति निर्माण झाल्या आहेत. ब्राह्मणांना सहा कर्में व क्षत्रियांना तीन कर्में सांगितलीं आहेत. वैश्य व शूद्र याना आचाराचे नियम सांगितलेले असून अंत्यजांना धर्म–कर्म नाहीं. १८–३०.

१ जंबुद्वीप, २ शाकद्वीप, ३ शाल्मलीद्वीप, ४ प्लक्षद्वीप, ५ कुशद्वीप, ६ क्रौंच महाद्वीप व ७ पुष्करद्वीप, अशी सप्तद्वीपात्मक पृथ्वी असून तिचे नऊ खंड कल्पिले आहेत व काशी हें दहावें खंड आहे. ३३–३४.

वाराणसी तु दशमं विंध्याद्रिपर्वताग्रतः । पाणी चैव करांगुल्यां चतुरंगुलमुष्टिका* ॥ ३५ ॥
षष्टिमुष्टिर्भवेद्धस्तो हस्तचत्वारिंकं धनुः । द्विसहस्रधनुः क्रोशः क्रोशचत्वारि योजनम् ॥ ३६ ॥
शतं ग्रामां भवेद्देशो देशचत्वारि मंडलम् । शतमंडलं भवेत्खंडं नवखंडा च मेदिनी ॥ ३७ ॥
तन्मध्ये योजनशतं रामखण्डं व्यवस्थितम् । सप्तयोजनविस्तीर्णं तिष्टते शुभकर्मणि[1] ॥ ३८ ॥
ते वै कोंकणजा विप्राः कथिताः सर्व एव हि । नर्मदायाश्च कृष्णाया देशो मध्यः प्रकीर्तितः ॥३९॥
तत्रैव वासकारी च भूदेवकेवलो[2] भवेत् । तस्यापि पूर्वदेशेच अंतर्वेदी च जायते ॥ ४० ॥
केवलाः शिवभक्ताश्च सर्वबुद्धिविशारदाः । तस्य चोत्तरभागे तु उत्तमक्षेत्रराजसाः ॥ ४१ ॥
सर्वलोका महाश्रेष्ठा रामभक्ताश्च केवलाः । तस्याश्च पूर्वभागे च त्रिहोत्रपुरपट्टनम् ॥ ४२ ॥
तत्र[3] वासकरा विप्राः केवला देवरूपिणः । तस्याश्च पश्चिमे भागे गौडश्चैव तु जायते ॥ ४३॥
मानवास्तत्र लोकाश्च राजसाश्च प्रकीर्तिताः । अन्यत्र राक्षसा ज्ञेया ह्यभक्ता निर्दया जनाः ॥४४॥
पुरे वा नगरे वापि लोकाश्च भयदा ह्यपि । कर्नाटा निर्दयाश्चैव कौंकणाश्चैव दुर्जनाः ॥ ४५ ॥
तैलंगा द्रविडाश्चैव दयावंतो जना भुवि । पंचक्रोशे तु विविधा आचारविविधाः स्थिताः ॥ ४६
भाषा श्च विविधा ज्ञेयाः सर्वत्र इति वर्तते । नानाविधानि कर्मा[4]णि भक्तिश्चैव यथाक्रमम् ॥४७॥
एवं भक्तिविचार श्च नात्र तस्य[5] विचारणा । केचित्तु वैष्णवा भक्ताः शिवभक्ताश्च केचन ॥ ४८ ॥
पाखंडा विविधाः शाक्ता[6]ः सौरगाणेशपूजका[7]ः । केचित्तु गुरुभक्ताश्च नवीना नामधारिणः ॥ ४९
कलौ तु विविधा धर्मा भक्तिनाशककेवलाः । इदमग्रे भवेत्पुत्र[8] सर्वधर्मं च लोपयेत् ॥ ५० ॥
तन्मध्ये दुष्टक्षत्राश्च दुष्टलोका विशेषतः । भविष्यं कथ्यत इदं ह्यग्रे भवेदसंशयम् ॥
इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखण्डे ब्राह्मणोत्पत्तिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पंचमोऽध्यायः ।

## ब्राह्मणविचारः ।

हेरंबमीश्वरं चात्र नत्वा तातं जगद्गुरुम् । जातिनिर्णयवाक्यानां संग्रहो लिख्यते मया ॥ १ ॥
विष्णोर्ब्राह्मणजातिश्च जज्ञे ब्रह्मा चतुर्मुखः । वाय्वाद्याः क्षत्रियाः प्रोक्ता वैश्यो वैश्रवणादयः ॥
यमाद्याः शूद्रकाः प्रोक्ताः सनाद्या नैष्ठिका मताः । दुर्वासाद्यास्तु यतयो मन्वाद्या गृहिणो मताः ॥
वैराग्यापरिपाकाश्च[9] वैन्याद्या वनगाश्रमाः । देवा ह्यपि चतुर्वर्णाश्चतुराश्रमभागिनः ॥ ४ ॥
मर्त्यास्त्वैसर्गिका एव वर्णाश्रमविभागिनः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णचतुष्टयम् ॥ ५ ॥
द्राविडाः पंचगौडाश्च दश ब्राह्मणजातयः । गौडाश्चैव शतं पंच विविधा धर्मचारिणः ॥ ६ ॥
गंगादितीर्थराजानो गयातीर्थनिवासिनः । अयोध्यायां भवा विप्रा अंतर्वेदीगता अपि ॥ ७ ॥
कान्यकुब्जा जगन्नाथे तथा जायंतिजा अपि । प्रभासा भाल्लवा वल्का अन्योन्यं ते विभागिनः ॥
मालवास्तौलवाश्चैव तथा सौगंध्यवासिनः । शौल्का हैवाः पार्वताश्च पद्याः शैब्याश्च राष्ट्रगाः ॥ ९

१ शुभकर्माणि तिष्ठति । २ भूदेवदेवलः । ३ तत्रै ४ मार्गाणि । ५ नात्रस्य च । ६ सक्ताः । ७ पूजिताः । ८ पुत्रः । ९ परिपाके ।

चार अंगुलें = १ मुष्टी; साठ मुष्टी = १ हात; चार हात = १ धनु; दोन सहस्त्र धनु = १ क्रोश; चार क्रोश = १ योजन. शंभर ग्राम = १ देश; चार देश = १ मंडल; शंभर मंडल = १ खंड. नऊ खंडे = १ मेदिनी. ३५–३७.

या नवखंडांमध्यें शंभर योजन लांब, सात योजन रुंद व शुभकर्मांनीं युक्त असलेल्या ह्या प्रदेशास रामखंड म्हणतात. ३८. तेथील सर्वच ब्राह्मणांना कोंकणस्थ ब्राह्मण असें म्हणतात. नर्मदा व कृष्णा या दोन नद्यांच्या मध्यभागाला मध्यदेश म्हणतात. ३९. येथें वास करणारे ब्राह्मण देवरूप होत. त्या मध्यदेशाच्या उत्तरेला उत्तम असे रजोगुणी व रामभक्त लोक राहतात. ह्या मध्यदेशाच्या पूर्व भागीं त्रिहोत्रपूर हें शहर वसलें असून तेथें राहाणारे ब्राह्मण हे केवळ देवरूप आहेत. त्याच्या पश्चिम भागाला गौडदेश आहे. ४०–४३. तेथील लोक रजोगुणी आहेत. यांशिवाय दुसरे लोक भक्तिहीन व निर्दय असे तमोगुणी होत. गांवांत किंवा शहरांत राहणारे ते भयंकरही असतात. ४४. कर्नाटकी निर्दय, कोंकणी दुर्जन, तेलंगी व द्रविड हे दयाळू आहेत. येथें प्रत्येक पंचक्रोशींत विविध आचार व भाषा असून नानाविध आहेत पंथ व भक्ति पण आहे. ४५–४७.

अनेक प्रकारचे भक्तिमार्गी येथे राहतात. विष्णुभक्त, शिवभक्त, नास्तिक, शाक्तपंथी, सूर्यभक्त, गणेशभक्त, गुरुभक्त इ. नवीन नवीन नाम धारण करणारे लोक येथें आहेत. ४८–४९. पुढें कलियुगांत मात्र भक्तिनाश करणारे अनेक विविध धर्म निर्माण होणार ! हे पुढें येणार व सर्व धर्मांचा नाश होणार ! त्यांत पुढें पुढें दुष्ट क्षत्रिय व विशेषतः सर्वच लोक दुष्ट होणार आहेत. हे माझें निश्चित भविष्य आहे. ५०–५१.

# अध्याय ५ वा

## ब्राह्मण विचार

हेरंब व जगद्गुरु ईश्वर यांस नमस्कार करून मी जाती–निर्णायक वचनें लिहितों. १. विष्णूपासून ब्राह्मण जाति व चतुर्मुख ब्रह्मदेव निर्माण झाला. वायु इत्यादि क्षत्रिय, वैश्रवण इ. वैश्य, यम इ. शूद्र होत. सनक इ. ब्रह्मचारी, दुर्वास इ. यति, मनु इ. गृहस्थ व वैन इ. वानप्रस्थाश्रमी होत. अशा रीतीनें देवांतसुद्धां चार वर्ण व चार आश्रम आहेत. २–४. मानवांना बाल्य, तारुण्य व वार्द्धक्य या तीन अवस्था असून चार वर्ण व चार आश्रम आहेत. ब्राह्मण, क्षत्रिय, वैश्य व शूद्र असे चार वर्ण आहेत. ५. पंचद्राविड व पंचगौड अशा दशविध ब्राह्मणजाती आहेत. विविध धर्माचरण करणारे गौड एकशेपांच आहेत. ६. तीर्थश्रेष्ठ गंगा, गया, अयोध्या, अन्तर्वेदी (काशी) येथे राहाणारे, कान्यकुब्ज, जगन्नाथस्थ, जायंतिज, प्रभास, माल्ह्व, वल्क, मालव, तौल्व, सौगन्ध, शौल्क, हैव, पार्वत, पद्म, शैब्य, राष्ट्रग, अवन्त्य,

अवंत्याः कांचिगाश्चैव गोमंततीरवासिनः । बादराः सिंधुजाश्चापि तथा वैभांडका द्विजाः ॥१०॥
देवर्षयश्चिताजातास्तथा संकरजातयः । क्रमुका देवलाश्चैव कांबोजा अंध्रजा द्विजाः ॥ ११ ॥
एकवेदा द्विवेदाश्च त्रिचतुर्वेदका अपि । मांसाशी मद्यपा विप्रा गोविंदपुरवासिनः ॥ १२ ॥
कोंकणो नाम कल्याणब्राह्मणा वेदपारगाः । सारस्वतास्तथा विप्रा मत्स्यादा इति कीर्तिताः ॥
ते वै दशविधा प्रोक्ताः पूर्वापरसमुद्रगाः । शुद्धाशुद्धास्तथा सिद्धाः कापौंढ्रा भीतचारिणः ॥१४
श्रेणयः कौशिका नर्वा वडीका लज्जका अपि । नैगमाः खरपृष्ठयाश्च तथा प्रेतविलासिनः ॥१५
ब्राह्मण्ययैतानाज्जाताः[1] कुंडगोलकिनस्तथा । न विश्वस्यात्पडेते वै विश्वासाद्घातयंति यत् ॥१६
प्रवासे बलयात्रायां सर्वेषां संगमो ह्यभूत् । सर्वैः संपूजितो रामो पंडितानां च गम्यते* ॥१७॥
आचारत्यागिनो विप्रा योनिसंनोमिसोवराः । वैदिकं कर्ममार्गस्था अनाचारविवर्जिताः* ॥१८॥
ब्राह्मणा इति विज्ञेया ब्राह्मणीं योनिमाश्रिताः । गायत्रीमुख्यतो मूलं वैश्वामैत्रीति नः श्रुतम् ॥
तत्राधिकारिणो ये वै ते वै विप्राः समीरिताः । अनधिकारिणां विप्रशब्दो[2] न भार्गवेरितैः[3] ॥
कारुकाणां च संस्कारैः शैवगायत्रीसंज्ञिताः । आचारत्यागिनः केचित्सत्कर्मत्यागिनः परे ॥
विगुणा हारिणो[4] विप्रास्तेषां शास्ता यमः स्वयम् । अनादिः सर्वतो ग्राह्यो दाने माने विभागशः*
अपेयत्वाद्धरौ सम्यग्गुरूपदेशपूर्वकम् * । सन्मार्गस्योपदेष्टारः स्वयं सन्मार्गशालिनः ॥ २३ ॥
उन्मार्गप्रतिहर्तारो गुरवस्ते समीरिताः । सन्मार्गमुपदेश्यन्ति[5] स्वयमुन्मार्गवर्तिनः ॥ २४ ॥
तस्करा इव निग्राह्या निर्वास्या विषयाद्बहिः । उक्तं नागरखंडे च गुरुणा धारितं महत् ॥
जातीनां निर्णयश्चापि धर्माधर्मविवेचनम् । भक्ष्याभक्ष्यविशेषश्च पात्रापात्रनिदर्शनम् ॥ २६ ॥
अधिकारमनावृत्य कृतं कर्म विगर्हितम् । महद्भिर्नैव दोषाय लोकोपकृतिहेतुना ॥ २७ ॥
अगस्त्यो भक्षयामास वातापिं जनकंटकम् । द्वादशाब्दान्यनावृष्टौ तथा सारस्वता द्विजाः ॥२८॥
ब्राह्मणाः खादयामासु[6]र्मत्स्यान्वेदार्थरक्षकाः[7] । वराहे च तथा प्रोक्तो गजभक्षो द्विजोत्तमः ॥
द्रोही[8] चानुकृतो लोके मांसभक्षणकारणात् । उक्तवान्परमं धर्मं भूयसां भक्षणं कथम् ॥३०॥
धर्मो वोऽनियतः[9] सत्यो हिंसा तु बहुला यतः । आकर्ण्य तद्वचो लोका[10] अचिरादर्थवद्वचः ॥
यथाचारं यथाकालं स्वस्वधर्मानुवर्तिनः । जनास्ते नावमंतव्या[11] दोषाः सर्वानुवर्तिनः ॥ ३२ ॥
गुणा एव विचेतव्या दोषा नैव च नैव च । न चात्रा[12]तीव कर्तव्यं दोषदृष्टिपरं मनः ॥ ३३ ॥
दोषो ह्यविद्यमानोऽपि तत्पराणां प्रदृश्यते । दोषाः सन्ति[13] बवहस्तान्यथाशक्ति[14] वदाम्यहम् ॥
गुणात्मन्यात्मके देहे वृथा[15] स्त्रीयाभिमानिनः । ईशापलापिनः[16] केचित्केचिद्धर्मपलायिनः ॥३५॥
सामभिस्तु[17] तपः केचिद्वयमित्यभिमानिनः[18] । दोषैकनिरताः केचिदीशतात्म्यमानिनः[19] ॥ ३६ ॥
स्त्रीत्वं पुंस्त्वं च द्वे जाती[20] इतरा भ्रांतिमूलकाः । वेदाः प्रमाणं नेच्छंति ह्यागमं नैव चापरे ॥

---

१ ब्राह्मणायतताज्जाता । २ शब्दानां । ३ भार्गविरितः । ४ हरिणो । ५ देश्यामि ।
६ वारयामासुः । ७ वेदानुभक्षकान् । ८ द्रोहिचानु० । ९ वो नियतः । १० लोकादचिरा ।
११ तेनावमंतव्या० । १२ नाचात्रा० । १३ सत्यं । १४ बहुत्रस्तान् । १५ तथा ।
१६ ईशापला० । १७ साम्यभिः । १८ दवमिथ्या० । १९ द्विशता० । २० द्वयोजातिरितरा ।

ांर्गाग, गोमंतस्थ, बादर, सिंधुज, वैभांडिक, देवर्षि, चिताजात; तसेंच संकरजाति, क्रमुक, ...व..., कांबोज, आंध्र, एकवेदी, द्विवेदी, त्रिवेदी, चतुर्वेदी, मांसभक्षक, मद्यपी इ. गोविंदपुरवासी ...र्व द्विज होत. ७-१२.

तसेंच कोंकण नांव असलेले पवित्र ब्राह्मण वेदपारंगत सारस्वत हे मत्स्यभक्षक विप्र होत. १३. समुद्राच्या पूर्व व पश्चिम तीरावर राहाणाऱ्या पूर्वोक्त दशविध ब्राह्मणांत कांहीं शुद्ध व अशुद्ध असे ब्राह्मण आहेत. सिद्ध, कापौंड्र, भीतचारी, श्रेणि, कौशिक, नर्व, वडीक, ...जक. नैगम, खरपृष्ठय व प्रेतविलासी. १४-१५. ब्राह्मणांपासून जन्मलेले कुंड व गोलक आणि (मार्गांत चार) अशा ह्या सहांवर विश्वास ठेवूं नये. ठेवल्यास ते घात करतात. १६. प्रवासांत, ...यसंचलनात सर्व ब्राह्मणांचा रामाशीं संबंध आला व सर्वांनीं रामाची पूजा केली आहे. १७. ...नाचाररहित व वैदिकमार्गानुसारी अशा ब्राह्मण कुलोत्पन्नांनाच ब्राह्मण समजावें, ब्राह्मणत्वाचें मूळ बीज गायत्री मंत्र आहे, असें ऐकलें आहे. १८-१९. या गायत्रीचा अधिकार असलेल्यांना विप्र समजावें. अधिकार नसलेल्यांना उद्देशून भार्गवानें विप्र शब्द उच्चारलेला नाहीं. २०.

आचारी-कारागीरांचा संस्कार झाल्यानें शैवगायत्री अशी संज्ञा प्राप्त झालेले, वैदिक मार्गाचा त्याग करणारे, कांहीं सत्कर्माचा त्याग करणारे, २१. गुणहीन व चोर अशा विप्रांना स्वतः यमधर्म शासन करतो. २२. गुरूपदेशपूर्वक सन्मार्गाचा उपदेश करून स्वतः सन्मार्गी असणारे व दुसऱ्यांस कुमार्गापासून परावृत्त करणारेच खरे गुरु होत; व जे स्वतः दुराचरणी असून दुसऱ्यांस सन्मार्गाचा उपदेश करतात, २३-२४. त्यांस चोरांप्रमाणे शिक्षा करावी. त्यांस देशाबाहेर घालवून द्यावें. जातिनिर्णय, धर्माधर्मविचार, भक्ष्याभक्ष्यविवेक व पात्रापात्रकथन नागरखंडांत आहे. कर्माचा अधिकार नसतां केलेलें कर्म निंद्यच होय. तथापि, लोकांवर उपकार करण्याच्या हेतूनें तशा प्रकारचें कर्म महापुरुषांनीं केल्यास तें दोषावह नाहीं. २५-२७. म्हणून लोकांस पीडा देणाऱ्या वातापीस अगस्तीनें खाऊन टाकलें. बारा वर्षें पर्यंत अवर्षण झालें असतां सारस्वतानें वेदरक्षणासाठीं मत्स्यभक्षण केलें, व इतर ब्राह्मणांनींही त्याचें अनुकरण केलें. वराह पुराणांत एका श्रेष्ठ ब्राह्मणानें गजभक्षण केल्याचें सांगितलें आहे. २८-२९.

हिंसकांचें मांस भक्षणाच्या बाबतींत अनुकरण केलें गेलें असतां तो म्हणाला, पुष्कळच लोक मांसमत्स्यभक्षण करीत असल्यानें तोच मोठा धर्म होय! ३०. हिंसा पुष्कळच असल्यानें तुमच्या अहिंसाधर्माला ती मर्यादित करतांच येत नाहीं. लोकांनींही त्याचें तें योग्य वचन ऐकलें. ३१. म्हणून देशकालानुसार आपआपला धर्म पाळणाऱ्या बहुजनसमाजाचा अवमान करूं नये. ३२. त्यांचे गुण तेवढे ध्यावे. दुर्गुणांकडे लक्ष देऊं नये. कारण दूषित मनामुळें लोकांना मुळांत नसलेला दोष दिसूं लागतो. अशा प्रकारचे दोष पुष्कळ ठिकाणीं असतात. तेच मी यथाशक्ति सांगतो. ३३. वस्तुतः हें शरीर त्रिगुणात्मक आहे; तरीपण लोकांना त्या शरीराविषयीं व्यर्थ स्वाभिमान वाटत असतोच. शरीरालाच ते आत्मा समजतात; कांहींजण सद्धर्मापासून दूर पळून जातात. कांहीं लोक जीवशिवाचें द्वैत मानतात. कित्येक लोक दोषैकदृष्टीनें विचार करतात. कित्येक सर्व विश्वच ब्रह्मस्वरूप समजतात. ३४-३६.

सत्यक्षमे कृते चेति लोकायतमतानुगाः[1]। शक्तिरेव सावित्रीति[2] मतं जगृहिरे[3] परे ॥ ३८ ॥
भैरवी तंत्रमालंब्य जातिसंकरकारिणः। जननीजनकान् जन्यान् धर्मपत्नीं द्विपंति च ॥
देवान् द्विजान् गुरून्प्राज्ञान्धर्ममार्गानुवर्तिनः। अवमान्य[4] महान्तं स्वं विविधा धिषणाः परे ॥ ४० ॥
ईशोऽहं बलभद्रोऽहं सिद्धोऽहं बलवानहम्। आढ्योऽभिजनवानस्मि कोऽन्योऽस्म इति वादिनः
भूताभिचारतो भक्षाः सर्वभक्षा विभक्षकाः। हरेरनर्पिताहारा अन्यदेवार्पिताशनाः ॥ ४२ ॥
पुत्रादीन्नैव पुष्णंति शिश्नोदररताः परे। परस्त्रीनिरताः सर्वे सल्लिकीदल्पधर्मिणः* ॥ ४३ ॥
स्वस्मिन् गुणित्वमंतारो देवाद्विजानुनिंदिनः। मांसाहारा मद्यपाश्च स्वदारच्छिद्रवादिनः॥ ४४
षंढा[5] एकलिंगैश्च पाखांडशाकुनास्तथा[6]। एतदुक्तमनुष्ठाय जनाः सर्वे विंडंति हि ॥ ४५ ॥
ततो दोषा न वक्तव्या गुणग्राही भवेज्जनः। एकजन्या जनाः केचिन्नैकजन्या[7] जनाः परे ॥४६
संकीर्णबुद्धयः केचिद्योनिसंकरकारिणः। दोषानेव[8] विचिन्वंति गुणा एव तु कारणम्[9] ॥ ४७ ॥
गरदा ब्राह्मणाः केचिद्विवाहस्य च कंटकाः। वृत्तिच्छेदकराः केचित्परदोषावमर्शिनः ॥ ४८॥
एवं जना बहुविधा दोषवार्तैकलोलुपाः। एककृच्छ्रा द्विकृच्छ्राश्च त्रिचतुःकृच्छ्रकाः परे* ॥४९॥
एककूर्चा द्विकूर्चाश्च बहुकूर्चातिकूर्चकाः*। मंत्रवादरताः केचिल्लोकोपकृतिहेतवे ॥ ५० ॥
नामभिर्जिनसंपन्नाः श्रुतिशास्त्रविवर्जिताः। लोकान्द्विषंति धर्मज्ञान् गरदा लोकगर्हिताः ॥५१
कूटसाक्षिप्रवक्तारः सस्नेहास्तादृशेषु च। पापक्षिपकलौ लोकान्सदोषा दोषवादिनः ॥ ५२ ॥
न तैः सह वसेद्धीमान्नावमन्येत कर्हिचित्। अनंता गणशो दोषा उदाहर्तुं नच क्षमः ॥५३॥
कृच्छ्रेशानां च वेदानां क्व तत्र परिवेदना। ग्रामे ग्रामे दुराचारा लोकाः संति ह्यनेकशः ॥५४॥
एवं महांतमालोक्य ग्राममाश्रयते जनाः। कंटकांकितवृक्षाणां महाफलजिघृक्षया ॥ ५५ ॥
आश्रयः क्रियते लोकैर्न तु तस्यज्यते वनम्। तीर्थे ध्वांक्षादयः पापाः पुण्यविध्वंसकारिणः ॥५६
उपेक्ष्यन्ते तीर्थगतं महत्त्वं समवेक्ष्यते। एवं सर्वपदार्थेषु गुणदोषाश्च संति हि ॥ ५७ ॥
तत्रैकं मनसादाय सर्वं ते सुजनाः सदा। तेषां च मूढ[10][11]पुरुषास्तत्र दोषस्य साक्षिणः ॥ ५८ ॥
त एव तत्प्रतीकारं कुर्युर्वंशाभिमानिनः। ये लोकाः परदोषांश्च व्याहरंत्यविचारिणः ॥ ५९ ॥
मिथ्या च द्विगुणं पापं सत्यं चेत्समभागिनः। धर्मशास्त्राण्यथालोच्य कृतकृत्यं विविच्य च ॥६०
तत्रैकं मनसादाय त्यज्यतेऽन्यदनर्थकम्। एवं कुलेषु सर्वेषु दोषजात्यमनंतकम् ॥ ६१ ॥
त्यक्त्वा गुणानुपादाय सर्वं ते सुजनाः सदा। तेषां च मूलसर्वेषु दोषजात्यमनंतकम्* ॥ ६२ ॥
धर्म्यान् ग्राम्यान् जनपदाविरुद्धान्[12] तथा चरेत्। काले[13] शिष्टैरनुमतं धर्मं चैवाचरेद् बुधः॥६३
धर्मोऽपि स्यादधर्मो सावधर्मोऽपि हि धर्मकः। अग्निहोत्रं गवालंभं संन्यासं पलपैतृकम् ॥६४
देवराच्च सुतोत्पत्तिः कलौ पंच विवर्जयेत्। सामान्यधर्मचारेण सर्वमुत्तममाचरेत् ॥ ६५ ॥
स्वमात्राधर्मचारेण कुलमेव समाश्रयेत्।* कालग्राम्या जनपदा वैदिका लौकिकाश्च ये ॥ ६६॥
धर्मा निंद्या अनिंद्याश्च कुलग्रामावभेदकाः। जगन्नाथे मत्स्यभुंजी मद्यपीति सपूर्वगः ॥६७॥

---

१ नुगीः। २ सवित्री। ३ जग्निहिरे। ४ अवम्यान्यमहं त्वं। ५ षंढासे०। ६ शकुने०। ७ नैकेजन्या०। ८ दोषा नैव। ९ कारणं ह्यत्र। १० दिकृ० ११ मूल। १२ पदान्वि०। १३ कालं शिष्टानतु०।

स्त्री व पुरुष अशा दोन जाती असून बाकी भेद हे केवळ भ्रममूलक आहेत असें कांहीं क मानतात. कांहीं जण वेदांना प्रमाण मानतात तर कित्येक वेदप्रामाण्य मानीत नाहींत. कांहीं ास्तिक मताचे लोक सत्य व क्षमा ही कृत युगांतील तत्त्वें मानतात, व शक्तीलाच परमेश्वर मजतात. ३७–३८. जातिसंकर करणारे कांहीं लोक भैरवी तंत्राचा स्वीकार करून आई–बाप, त्र व धर्मपत्नी यांचा द्वेष करतात. कांहीं जण देव, ब्राह्मण, इतर धार्मिक जन, गुरु व विद्वान् ोक यांचा अवमान करतात. ३९–४०. मीच समर्थ, मीच बलभद्र, मीच सिद्धपुरुष असून ाझ्यासारखा दुसरा कुलीन व श्रीमंत पुरुष जगांत कोण आहे? असें म्हणणारेही कित्येक ोक आहेत. ४१. भूतपिशाच्चसाधना करणारे कांहीं लोक सर्व कांहीं खातात. त्यांना त्याविषयीं धिनिषेध नसतो. ते विष्णूला अन्न अर्पण न करतां भलत्याच देवांना रक्तमांसाचा नैवेद्य ाखवितात. ४२. केवळ कामविषयांत गर्क होऊन पुत्रादिकांचे पोषण न करतां परस्त्रीलंपट ोऊन राहतात. स्वतःस गुणसंपन्न समजणारे, देवद्विजनिंदक, मांसभक्षक व मद्यपी असे कित्येक लोक आपल्या पत्नीची निंदा करतात. ४४. संकीर्ण विचारांचे व जातिसंकर करणारे लोक ा बाबतीत दोष मानीतच नाहींत. कारण यासाठीं वागण्यास सद्गुण असावे लागतात! ४७. विष देणारे, वृत्तिच्छेद करणारे, दुसऱ्यांचे दोषच पाहणारे, श्रुतिशास्त्ररहित जैन लोक, धर्मज्ञांचे द्वेष्टे, लोकनिंदित, खोटी साक्ष देणारे, तशा प्रकारच्या लोकांशीं स्नेह ठेवणारे, पापाचा प्रसार करणाऱ्या कलियुगांत स्वतः दोषी असून दुसऱ्यांस दोष देणारे जे असतील त्यांच्याशीं बुद्धिमान माणसानें सहवास करूं नये, व त्यांचा अवमानही करूं नये. जगांत दोष असंख्य आहेत. सर्वशक्तिमान अशा वेदांनाही त्यांचें पूर्ण ज्ञान नाहीं. म्हणून त्यांची ढोबळ रूपानेंसुद्धां मोजदाद करण्यास कोणी समर्थ नाहीं. प्रत्येक गांवांत अनेक दुराचारी लोक असतातच! ज्याप्रमाणें लोक कांटेरी वृक्षांच्याही वनांत फळासाठीं जातातच. कांटे आहेत म्हणून वनांत जाणें कोणी सोडून देत नाहीं. तसेंच तीर्थावर पुण्यनाश करणारे पापी लोक आहेत, म्हणून तीर्थाचें महत्त्व कमी होत नाहीं. अशा लोकांची उपेक्षा करावयाची असते, व तीर्थाकडेच लक्ष द्यावयाचें असतें. कारण सर्वच पदार्थांत गुण-दोष आढळतात. ४८–५७.

म्हणून त्यांपैकीं आपल्या मनानें गुण तेवढे घेणारे सुजन होत. मूर्ख लोक मात्र दोषच पहात असतात. ५८. वंशाभिमानी लोकांनीं अविचारी व परनिंदक लोकांचा मुखभंग केलाच पाहिजे. ५९. वस्तुतः अशा मिथ्या दोषारोप करणाऱ्या लोकांना दुप्पट पाप लागतें, व सत्यदोषारोप केल्यानें समसमान पाप लागतें. म्हणून धर्मशास्त्राचें अवलोकन करून कर्तव्याचें विवेकपूर्वक पालन करावें, व निरर्थक गोष्टींचा त्याग करावा. सर्वच कुळांमध्यें अनंत दोष व अनंत जाती असतात. ६०–६२. म्हणून शहाण्यानें देशविरोधी धर्माचें आचरण न करतां कालानुकूल व शिष्टसंमत असाच धर्म आचरावा. ६३. कारण कलिकालानुसार धर्माला अधर्मरूप प्राप्त होतें व अधर्माला धर्मरूप प्राप्त होतें! उदा. अग्निहोत्र, गवालंभ, संन्यास, समांस–श्राद्ध व दीरापासून सुतोत्पत्ति हीं पांच कलियुगांत वर्ज्य मानलीं गेलीं आहेत. तरीपण अग्निहोत्र व संन्यास कलियुगांत निंद्य नव्हे! सारांश, सर्वसाधारण व सर्वोत्तम धर्माचें आचरण करावें. निदान स्वतःपुरता कुलधर्म पाळावा. काल, ग्राम व देश यांना अनुसरून धर्म हा निंद्य

उत्तरे मांसभागी च पश्चिमे जलजाहृतिः । मातुले च परिणीय[1] नर्मदादक्षवासिनः ॥ ६८ ॥
यद्वा जनगृहीतत्वाद्धर्म एवोच्यते[2] बुधैः । इतरेषामधर्मोऽसौ पातित्यात्पातको मतः ॥ ६९ ॥
स्वस्वकर्मण्यभिरताः सिद्धिं विंदंति मानवाः । समानकुलगोत्राणां कन्यासंबंधमाचरेत् ॥ ७० ॥
विषमाणां नैव कार्यं कुलक्षयकरोति यः । जन्मना जायते सोऽयं संस्काराद् द्विज उच्यते ॥७१॥
वेदाभ्यासाद्भवेद्विप्रो ब्रह्म श्रोत्रियतामियात् । यत्र वेदस्तत्र कर्म तद्द्वयं नियतं मतम् ॥ ७२
न निंद्यात् ब्राह्मणांल्लोके कथं वापि चरंति ते । गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्
इह प्रच्छन्नपापानां[3] शास्ता वैवस्वतो यमः । कलौ युगे संप्रवृत्तो धर्माधर्मविपर्ययः ॥ ७४ ॥
दाक्षिण्यादर्थलोभाद्वा भयाद्वापि भविष्यति । क्वाहं कोऽहं कुलं किं मे संबंधः कीदृशो मम ॥७५
स्वस्वधर्मो न लुप्येत ह्येवं संचिंतयेद्बुधः । अभिमानेन वेद्यार्थे धर्माधर्मविनिर्णयः ॥ ७६ ॥
नारदो ब्रह्मबीजाय मम चेत्यूचिवान्बुधः । वर्णावरं जनं दृष्ट्वा लोकशिक्षार्थमुद्यतः ॥ ७७ ॥
यमोऽपि पापिनां शास्ता कर्माकर्मविकर्मणाम् । सनकादीन्प्रजायंते सभां द्रष्टुं न विक्रमन्* ॥७८
इंद्रसृष्टा जातयस्तु पाखंडा इति कीर्तिताः । विश्वामित्रगर्गजाश्च अभिरंत्या इतीरिताः ॥ ७९ ॥
काश्यपा ब्राह्मणाः सर्वे मानजातिविभेदकाः । विभिन्नकर्ममतयो नानाभावाः कलौ युगे ॥ ८० ॥
भविष्यंति न चाप्येषां सर्वसंबंधिता भवेत् । दृश्यंते कुलधर्माश्च संति तेषां पृथक् पृथक् ॥ ८१ ॥
न चात्रातीव वैयात्यं[4] विद्वद्भिः समुदीरितम् । वैयात्याद्[5] भ्रंशितो येन कंसश्चागाद्भृशं स्मृतिम् ॥८२
केचिद्द्रोणात्समुत्पन्नाः केचित्कुंभसमुद्भवाः । पण्याः केचिद्भुजंगाच्च[6] शरादग्रेजनादपि ॥ ८३ ॥
जाता जननतद्वंशा निंदामूलं तु ये गताः । सद्वंशजा अयोग्याश्च निंद्या एव न संशयः ॥ ८४ ॥
धनुर्वंशो विशुद्धोऽपि निर्गुणः किं करिष्यति । योग्यो[7] दुर्वंशजातोऽपि शस्यते सर्वसज्जनैः ॥८५
मुक्ताकस्तूरिकादीनि शक्तिरजतकान्यपि । देवादिसर्वभोग्यानि योगश्चैवात्र कारणम् ॥८६॥
योग्यो जनोपदेष्टा च योगो योग्यः सदैव हि । योगियोग्यत्वमन्विष्यन्स्वस्मिन्नेव हि सर्वदा ॥
जलूकास्तनसंसिक्ता रक्तं पिबति नामृतम् । एवं भावा जनाः सर्वे दोषमात्रैकदृष्टयः ॥ ८८ ॥
किं ब्रूमः कस्य वा ब्रूमः कति ब्रूमो जना वयम् । भगवद्धर्मविमुखास्तथा भागवतेषु च ॥ ८९ ॥
सच्छास्त्रदूषकाः सर्वे दुःखशास्त्रविचिंतकाः । विशिष्टद्रोहमापद्य पतंति निरयेषु च ॥ ९० ॥
स्कांदे नागरखंडेऽपि प्रोक्तं लैंगेऽपि चादितः । जातीनां निर्णयः सम्यगुदाहरणपूर्वकम् ॥९१॥
तत एव विशेषो हि द्रष्टव्यः सर्वसज्जनैः । जातिनिर्णयवाक्यानां संग्रहस्य विलेखनात् ॥९२॥
विश्वेशः प्रीयतां काश्यां तारकेश्वरसंज्ञितः ।

इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखंडे संग्रहसारे ब्राह्मणविचारो नाम पंचमोऽध्यायः ॥५॥

---

१ परीणाय २ एव्यो० । ३ प्रच्छिन्न० ४ पात्रा० । ५ वैपात्य । ६ भुजंगाश्च । ७ योग्ये

बन्धही होतो. मग तो धर्म वैदिक असो किंवा लौकिक असो! उदा. ओरिसामध्यें [illegible]भक्षण, पूर्वेकडे मद्यपान, उत्तरेकडे मांसभक्षण, पश्चिमेकडे मत्स्याहार व नर्मदेच्या दक्षिणेकडे [illegible]गाऱ्या लोकांचा मातुलकन्यापरिणय ह्या सर्वांचा सर्वसाधारण लोकांनी स्वीकार केल्यानें त्या [illegible]चारांना ज्ञानी लोकांनीं धर्मच म्हटलें आहे. इतरांना मात्र हा आचार पापकारक [illegible]. ६४–६९. कारण स्वधर्माचरण करणाऱ्या मानवांनाच सिद्धि मिळते. योग्य कुळ–गोत्र [illegible]सलेल्या घराण्याशींच विवाहसंबंध करावा. अन्यथा कुलक्षय होतो. अशा रीतीनें जन्मास [illegible]लेल्या कुमारास उपनयनसंस्कारामुळें द्विजत्व येतें. ७०–७१. वेदाभ्यासानें विप्रत्व येतें व ह्या [illegible]न गोष्टीमुळें तो श्रोत्रिय बनतो. वेद व कर्म हीं दोन्हीं नियत आहेत. ७२. ब्राह्मण कसेही [illegible]गले तरी त्यांची निंदा करूं नये. बुद्धिमान् लोकांचा शासनकर्ता गुरु, दुराचाऱ्यांचा शासनकर्ता राजा व गुप्त पापाचरण करणाऱ्यांचा शास्ता यम हा आहे. मर्जी सांभाळण्यासाठीं, [illegible]शांच्या लोभामुळें व भीतिस्तव कलियुगांत प्रचलित धर्माचा विपर्यास होणार! 'मी कोण आहे, मी कोठें आहे, माझा वंश कोणता, माझा संबंध कोणाशीं असला पाहिजे, या सर्व गोष्टींचा विचार विद्वान् माणसानें धर्मसिद्धीसाठीं केला पाहिजे. धर्माधर्माचा निर्णय अभिमानपूर्वक जाणून घेतला पाहिजे. ७३–७६. लोकशिक्षणासाठीं नेहमीं तत्पर असलेल्या ज्ञानी नारदानें हीन वर्णांची [illegible]स्थिति हें पाहून ब्रह्मबीज लोकांस व मला सांगितलें आहे. ७७. इंद्रानें निर्माण केलेल्या जातींना पा[illegible] म्हणतात; विश्वामित्र व गर्ग यांपासून झालेल्या जातींना अभिरत्य म्हणतात कलियुगांत बाकी सर्व ब्राह्मण कश्यप ऋषीचे वंशज असून ते सर्व भिन्नभिन्न आचारविचारांचे व जातिभेद मोडणारे होतील. त्यांचा सर्वांशी समान संबंध राहाणार नाहीं. कुलधर्मही विविध होतील. ७९–८१. अंगीं उद्धटपणा बिलकुल असूं नये, असे विद्वान् लोक म्हणतात. उद्धटपणामुळें कंस मरण पावला. ८२.

कांहीं द्रोणापासून जन्मले, कांहीं कुशापासून जन्मले. कांहीं शर व जार–ब्राह्मण यांपासून जन्मास आले. ८३. अशा लोकांच्या वंशांत जे जन्मले ते निन्द्य ठरले! तसेंच चांगल्या वंशांत जन्म[illegible] असूनही अपात्र असल्यास ते निन्द्यच होत. ८४ धनुष्याचा बांबू कितीही चांगला असला तरी त्यास चांगल्या दोरीची जोड नसल्यास तो निरुपयोगी ठरतो? तसेंच मनुष्य हीन [illegible] जन्मलेला असूनसुद्धां योग्यता असल्यास सर्वच लोक त्याची प्रशंसा करतात. ८५. मोती, कस्तुरी, चांदी वगैरे पदार्थ कोठेंही निर्माण झालेले असले तरी ते स्वतःच्या गुणांमुळें देवादि सर्वांनाच उपभोग्य असतात. ८६. लोकांना उपदेश करणारा योग्य असला पाहिजे. उपदेश्य–शिष्यही योग्य असला पाहिजे. कारण अशाच दोघांचा गुरुशिष्यभाव योग्य असतो! मनुष्यानें [illegible] स्वतःच विचार करावा. ८७. कारण गोस्तनावरील गोचीड रक्तच पीते, दूध पीत नाहीं. त्याप्रमाणे सर्व लोक दोषैकदृष्टि असतात. ८८. आम्ही काय सांगावें, कोणाला सांगावें व किती सांगावें! जे लोक भगवद्धर्माचें पालन करीत नाहींत, चांगल्या शास्त्रांची निंदा करतात व दूषित शास्त्रांचें चिन्तन करतात, ते श्रेष्ठ लोकांच्या द्रोहास पात्र होऊन शेवटीं नरकांत पडतात! ९०. हें सर्व स्कंदपुराणांतर्गत नागरखंडांत व लिंगपुराणांतही सविस्तर सांगितलें आहे, व जातिनिर्णयसुद्धां सोदाहरण सांगितला आहे. ९१. म्हणून सर्व सज्जनांनीं विशेष जाणून [illegible]च्यांचें असल्यास तेथेंच पहावें. जातिनिर्णायक वाक्यांचा संग्रह येथें लिहिला आहे. त्यामुळें [illegible] तारकेश्वर विश्वेश संतुष्ट होवो ९२.

# अथ षष्ठोऽध्यायः ।

## पृथ्वीदानम्

महादेव उवाच –

दानस्य कथनं वक्ष्ये शृणुष्व त्वं गजानन । येन दत्तेन देवास्ते भवंति प्रणतैर्नरैः[1] ॥ १ ॥
हिरण्यकशिपोः पुत्रो विरोचन इति श्रुतः । तस्यात्मजो बलिः पूर्वमासीद्विष्णुपरायणः ॥ २
हृतं तेनाधिपत्यं यच्छक्रस्य तु शचीपतेः । तस्मात्स शक्रः शरणं जगाम परमेष्ठिनम् ॥ ३ ॥
सह सर्वैः सुरगणैः क्षीराब्धिनिलयस्य च । लक्ष्मीपतेः पदांभोजं नत्वाकथयदात्मनः[2] ॥ ४ ॥
स्वामित्वं हृतमस्माकमित्याकर्ण्य स माधवः। प्राह त्वं गच्छ भगवन्स्वधाममचिराच्च तत् ॥
भ्रंशयामि[3] बलिं राज्यादिति श्रुत्वा हरीरितम्। स्वधाम प्रययुः सर्वे तदा लक्ष्मीपतिः स्वयम् ॥
कश्यपस्यात्मजो भूत्वा बटुर्वामनरूपधृक् । प्रययौ बलिराजस्य यज्ञमंडपमेव सः ॥ ७ ॥
पूजितस्तेन बलिना प्रोक्तः किं ते ददाम्यहम् । तच्छ्रुत्वा वामनः प्राह त्रिपदं भूमिका मम ॥८
देहि राजन्बलिः प्राह किमल्पं याच से स्वयम् । वामनः प्राह कुहको स्वल्पा वै भूमिका मम ॥
त्रैलोक्यमिति मन्वानो दत्ता ते वामनोत्तम । भूदेवरूपो हि मम भासितः पुरुषोत्तमः ॥ १०
आगतोऽसि त्वहं धन्यो जातोऽस्मि भुवनत्रये । ततो वर्धितुमारेभे वामनोऽनंतरूपधृक् ॥ ११
मर्त्यलोके चैकपादं स्वर्गलोके द्वितीयकम् । जातं तदा बलेः पृष्ठे पदं दत्तं तृतीयकम् ॥ १२ ॥
पाताले स्थापितस्तत्र बद्धो वै नागपाशकैः । बलिः प्राह बटुं देवं भैक्ष्यं मे देहि माधव ॥१३॥
तदा दत्तं तस्य भैक्ष्यं हरिणा विप्ररूपिणा । अन्यदत्तां हरेद्भूमिं यो विप्रस्य नरोत्तमः ॥१४॥
तत्तद्दानं प्रदत्तं ते शुना दृष्टं तु वायसैः । रजस्वलाभिः शूद्रैश्च भूदेवद्विषतस्तथा ॥ १५ ॥
असत्यवादिभिर्दुष्टमन्नं दत्तं तवासुर । इति दत्वा बलेर्भैक्ष्यं तदासौ वामनो हरिः ॥ १६ ॥
प्रददौ भूमिकां सद्यः कश्यपाय महात्मने । कश्यपो गौडविप्रेभ्यो द्राविडेभ्यः प्रयच्छति ॥ १७
दैवज्ञेभ्योऽर्थिभिश्चैव ज्ञानिभ्यो मतिमांस्तथा । आर्यावर्त्तः पुण्यभूमिर्मध्यं विंध्यहिमागयोः ॥
तद्वासेभ्यः पंडितेभ्यः कर्मनिष्ठेभ्य एव च । ततस्त्रेतायुगे जाते कार्त्तवीर्यादिभिर्नृपैः ॥ १९ ॥
बलवद्भिर्धृता भूमिर्विप्राणामुद्धतैः शठैः । ततोऽभवत्स भगवान् विप्रैस्तैः कश्यपादिभिः ॥
प्रार्थितो रेणुकायां स जमदग्न्येर्[4]महौजसः । भार्गवो राम इति तत्तपश्चक्रे समाहितः ॥ २१ ॥
कैलासाद्रौ शिवस्थाने तुष्टेन तपसा सदा । दत्तः स्वपरशुस्तस्मै[5] रामः परशुपूर्वकः ॥ २२ ॥
कस्मिंश्चिदपरो देवपितृप्रोक्तैः[6] स्वमातरम्। जघान तेन तुष्टोऽभूद्वृणीष्व मनसेप्सितम् ॥ २३ ॥
वर्ततां मद्धिते[7] माता जीवत्वेव मया पते । सजीवाश्च भवन्त्वेते सजीवास्तेऽभवंस्तदा[8] ॥२४॥

---

१ प्रीणता नरैः । २ नत्वा कथ० । ३ ध्वंसितं मां बलीराज्या० ४ दग्न्यो० । ५ हस्तं मा । ६ पित्रप्रोक्तः । ७ वर्तते तद्धिते । ८ जीवयिष्यामि बंधुश्च जीविता तत्क्षणाद्विभुः ।

# अध्याय ६ वा

## पृथ्वीदान–प्रशंसा

महादेव म्हणाले – हे गजानना, मी आतां दानमहत्त्व सांगतों, ऐक. कारण मनुष्यांनी नम्र होऊन केलेल्या दानामुळें देव प्रसन्न होतात. १. हिरण्यकशिपूचा मुलगा विरोचन होता, हें तूं ऐकलेंच आहेस. त्याचा मुलगा बळी हा एक विष्णुभक्त होता. २. त्यानें शचीपती इंद्राचें आधिपत्य हिरावून घेतलें, म्हणून इंद्र ब्रह्मदेवाला शरण गेला. ३. नंतर ब्रह्मदेव सर्व देवांसह क्षीरसागरनिवासी विष्णूकडे गेला व त्यास सर्व हकीगत निवेदन केली. तेव्हां त्यांचें तें निवेदन ऐकून लक्ष्मीपति विष्णु म्हणाले कीं, ब्रह्मदेवा, तूं स्वस्थानीं जा. मी बळीला राज्यभ्रष्ट केलेंच असें समज. हें विष्णुवचन ऐकून सर्व देव आपल्या स्थानीं निघून गेले. नंतर लक्ष्मीपति विष्णु स्वतः कश्यपपुत्र झाला व वामनरूप बटु होऊन होऊन बळिराजाच्या यज्ञमंडपांत गेला. ४–७. त्या वामनबटूची पूजा करून बळि म्हणाला, मी आपणांस काय देऊं? तें ऐकून वामन म्हणाला, मला त्रिपाद भूमि दे. ८. बळि म्हणाला, एवढें कमी कां मागतां? कांहीं अधिक मागा. यावर मायावी वामन म्हणाला, मला थोडीच भूमि पाहिजे. ९. त्रिपाद म्हणजे त्रैलोक्य असून हा वामनरूपधारी परमेश्वरच आहे असें निश्चितपणें ओळखून बळि म्हणाला, हे वामनोत्तमा, तूं ब्राह्मणरूपधारी पुरुषोत्तम आला आहेस, असें मला वाटतें. तुला मी त्रिपाद भूमि दिली. मी धन्य झालों. हें ऐकून वामनानें विश्वरूप धारण करण्यास आरंभ केला. १०–११. त्यानें आपल्या एका पदन्यासानें मृत्युलोक व्यापला, दुसऱ्यानें स्वर्गलोक व्यापला व तिसरें पाऊल बळीच्या पाठीवर ठेवलें. १२. त्यास पाताळांत नागबद्ध करून ठेवलें. तेव्हां बळि बटु–देवास म्हणाला, हे माधवा, मला आतां अन्न दे. १३. तेव्हां ब्राह्मणरूपधारी विष्णूनें त्यास अन्न दिलें. तें असें–ब्राह्मणास दान केलेली भूमि राजानें घेतल्यास ती भूमि तुझी आहे. तसेंच कुत्रा, कावळा, रजस्वला स्त्री व शूद्र यांनीं पाहिलेलें आणि ब्रह्मद्वेष्टे व असत्यवादी यांचे दूषित अन्न मी तुला दिलें आहे. बळिराजास असें सांगून वामनानें सर्व पृथ्वी महात्मा कश्यपास दान केली. पुढें कश्यपानें ती पृथ्वी गौड व द्रविडांना दिली. १४–१७. तसेंच दैवज्ञ, याचक, ज्ञानी यांनाही पृथ्वी दिली. पुण्यभूमि आर्यावर्त हा भाग अर्थात् विंध्य व हिमालयाचा मध्यभाग तेथील कर्मनिष्ठ पंडितांना देऊन टाकला. १८. नंतर त्रेतायुगांत बलवान, उद्धट व लबाड अशा कार्तवीर्य राजांनीं ब्राह्मणांची भूमि घेतली. म्हणून कश्यपादि ब्राह्मणांनीं भगवंताची प्रार्थना केल्यावर महातेजस्वी अशा जमदग्नीपासून रेणुकेच्या ठिकाणीं भार्गवराम जन्मला. त्यानें कैलास पर्वतावर तपश्चर्या केली. त्याच्या त्या तपानें संतुष्ट होऊन शंकरानें त्यास आपला परशु दिला. तेव्हांपासून रामाचा परशुराम झाला. १९–२२. एकदा वडिलांच्या आज्ञेवरून त्यानें आपल्या मातेचा वध केला. तेव्हां वडिलांनीं संतुष्ट होऊन त्यास ‘इच्छित वर माग’ असें म्हणतांच आपली माता व बंधु जिवंत व्हावे, असा वर त्यानें मागितला, व लगेच तीं सर्व जिवंत झालीं. २३–२४.

ततो रामो गतस्तीर्थयात्रां कर्तुं महीतले । पश्चान्मुनेराश्रमं स जगाम कृतवीर्यजः ॥ २५ ॥
अर्जुनो[1] भूपतिर्नाम ययाचे धेनुमुत्तमाम् । न ददौ स तं वै बलेन च जगाम सः ॥ २६ ॥
हते तस्मिन्स रामोऽथ जघान क्षत्रियान् बहून् । एकविंशतिवारं स शोधयित्वा पुनः पुनः ॥२
पृथ्वीं निःक्षत्रियां चक्रे तर्पयामास तान्पितॄन् । ह्रदेषु[2] रुधिरेणाथ पूरितेषु समंततः ॥ २८ ॥
तदा स भूमिदानं स पितॄणां मुक्तिहेतवे । आत्मानं क्षत्रिहत्यायाश्चक्रे[3] शुध्यर्थमेव च ॥ २९ ॥
कश्यपाय वसिष्ठाय मुनीनां च महात्मनाम् । अस्मिन्क्षेत्रे भार्गवात्प्रागॢ[4] जामदग्न्येन ते शुभम् ।
तदा स पर्वतं प्रायात्सह्याचलमनुत्तमम् । ददर्शोदधिमाकाशं कुर्वाणं लहरीचयैः ॥ ३१ ॥
मुंचंतमिव विप्रेंद्राश्चिंतयामास भार्गवः । भवेत्कथमिदं कार्यं सागरे स्थानमद्भुतम् ॥ ३२ ॥
इत्येवं चिंत्यमानस्य प्रययायब्जजोद्भवः । नारदः पूजितस्तेन विधानविधिपूर्वकम् ॥ ३३ ॥
पृष्टस्तेन तु विप्रेंद्रो नारदेन महात्मना । किमर्थं चिंतयाविष्टस्तिष्ठति भार्गवोत्तमः ॥ ३४ ॥
भार्गवोऽप्याह तं विप्रं न मे वस्तु महीतले । दानं दत्ता मया पृथ्वी कश्यपाय महात्मने ॥३५॥
ततस्तं नारदः प्राह निःसारय महोदधिम् । शरेण कर्णपर्यंतमुद्धृतेन द्विजोत्तम ॥ ३६ ॥
ततो नारदवाक्येन पूजयित्वा नरोत्तमम् । सह्याचलस्य शिखरे स्थितो रामस्तदाभयम् ॥३७॥
प्राप्तं[5] क्षणाज्जलनिधिं दृष्ट्वा वल्मीकवासिनः । प्राणिनः पूर्वमुदधिर्यानमज्जयदंबुनि[6] ॥ ३८ ॥
प्राहुस्ते तव साहाय्यं[7] कुर्मो जलनिधे वयम् । मा चिंतां कुरु पाथोधेऽस्माकं बाणो[8] यथा न ते ॥
पीडां करिष्यते चास्मान्निःसार्य[9] जलाद्बहिः । ततस्तेन समुद्रेण बहिर्निष्कासिताश्च ते ॥४०॥
प्राणिभिस्तैर्धनुर्मौर्वी[10] त्रोटिता भक्षिता तदा[11] । सूर्योदये तथा जाते संदधे सायकोत्तमम् ॥
निःसारयितुमंबूनामालयं सागरं तदा । ग्रामाणां द्वादशानां तु परिमाणेन भार्गवः ॥ ४२ ॥
ततः स सायकः पंच ग्रामान् जलनिधेरुत्तमं[12] । निःसारयामास तदा समानग्रामपूर्वकम् ॥४३॥
स्थलं जातं तदा रामो वासं चक्रे समाहितः । रामक्षेत्रमिति प्रोक्तमिषुपातसमुद्भवम् ॥४४॥
सह्याधस्ताद्वरा[13] भूमिः पुण्या[14] तीर्थवती ह्यभूत् । नानाजनपदैर्युक्ता सारामनगराकरा ॥४५॥
नानावृक्षवती रम्या नानापुष्पोपशोभिता । यत्र बाणः पतत्यत्र बाणवल्लीति विश्रुता ॥४६॥
पुरी जाता पुण्यतमा रामबाणसुनिर्मिता । केरलाश्च तुलंगाश्च तथा सौराष्ट्रवासिनः ॥ ४७ ॥
कोंकणाः करहाटाश्च करनाटाश्च बर्बराः । इत्येते सप्त देशा वै कोंकणाः परिकीर्तिताः ॥ ४८ ॥
तत्र पूर्यो बहुविधा आसन् पुण्यपरैर्नरैः । अधिष्ठिताः सुरैश्चापि शक्रादिभिरनेकशः ॥ ४९ ॥
भूर्योजनशतायामा पंचयोजनविस्तृता । गोकर्ण इति विख्यातं पावनं भुवनत्रये ॥ ५० ॥
रामेण कृतमात्रैव यत्र देवोऽवसत्सदा । शिवो महाबल इति देवैः सार्धमुमापतिः ॥ ५१ ॥
रावणेन पुरा नीतः कैलासाद्गणनायकः । स्थापयामास तल्लिंगं महाबल इति स्मृतः ॥ ५२ ॥
तस्मादुत्तरतःस्थाने[15] दश योजनमात्रतः । नारवेति च विख्याते सप्तकोटीश्वराह्वयम् ॥ ५३ ॥
वसिष्ठादिभिरत्युग्रतपोभिर्निर्मितं पुरा । लिंगं परशुभं प्रोक्तं नानाभीष्टप्रदायकम् ॥ ५४ ॥

---

१ आस्तिकना । २ ह्रद्देशे । ३ क्षत्रि । ४ भार्गवाप्राग् ५ प्रातः । ६ मंबुनि । ७ साहस्यं ।
८ बाणे यथानये । ९ चास्मन् । १० प्राणिनस्ते । ११ भक्षितास्तदा । १२ ग्रामं जलविधेवतं ।
१३ तात्वरा । १४ पुण्यं । १५ स्तिष्ठेद्दश०

नंतर राम पृथ्वीतलावरील तीर्थयात्रेसाठीं निघून गेला असतां कार्तवीर्य अर्जुन मुनीच्या आश्रमांत आला व त्यानें धेनुरत्न मागितलें. पण मुनीनें ती कामधेनु दिली नाहीं. म्हणून त्या मुनीवर कार्तवीर्य अर्जुनानें हल्ला केला. २५–२६. जमदग्निमुनीचा वध झाल्यावर परशुरामानें क्षत्रियांना शोधून काढून त्यांचा एकवीस वेळां वध केला. २६–२७. अशा रीतीनें पृथ्वी निःक्षत्रिय केली व सर्वत्र क्षत्रियरक्तानें भरलेल्या डोहांतील रक्तानें पितृतर्पण केलें. २८.

नंतर पितरांना मुक्ति मिळावी व क्षत्रियहत्येपासून स्वतःची शुद्धि व्हावी, या हेतूनें परशुरामानें पृथ्वी कश्यप व वसिष्ठ यांना दान केली, २९-३०. व सर्वश्रेष्ठ अशा सह्याद्रीकडे प्रयाण केलें. तेथें आपल्या लाटांनी आकाशास देखील समुद्राचें रूप प्राप्त करून देणारा सागर पाहून तो श्रेष्ठ ब्राह्मण या सागरांत एक अद्‌भुत स्थान कसें निर्माण करावें या विचारांत पडला. ३१–३२. अशा ह्या विचारमग्न स्थितींतच परशुरामाकडे ब्रह्मसुत नारद उपस्थित झाला. परशुरामानें त्याचा विधिपूर्वक सत्कार केला व तो त्यास म्हणाला, सर्व पृथ्वी कश्यप महात्म्यांना दान केल्यामुळें मला स्वतःची अशी राहण्यास जागाच नाहीं ! हें ऐकून नारद त्यास म्हणाला, हे द्विजोत्तमा, आकर्ण बाण ओढून महासागरास दूर लोट. ३३–३६. नारदाचें वाक्य प्रमाण मानून परशुराम सह्याद्रीच्या शिखरावर निर्भयपणें उभा राहिला. ३७. समुद्राकडे दृष्टि लावलेल्या त्या परशुरामाची मुद्रा पाहून यापूर्वी पाण्यांत बुडलेले वारुळांतील प्राणी समुद्राला म्हणाले, हे जलनिधे, तुला आम्ही मदत करतों. तूं चिंता करूं नकोस. फक्त आम्हांस पाण्यांतून बाहेर काढ. लगेच समुद्रानें आपल्या पाण्यांतून बाहेर सोडलें व त्या प्राण्यांनीं परशुरामाच्या धनुष्याची दोरी तोडून खाऊन टाकली ! तरीपण सूर्योदय होतांच परशुरामानें सागरास बारा गांव मागें हटविण्यासाठीं पुनः उत्कृष्ट शरसंधान केलें, ३८–४२. व आपल्या बाणानें समुद्रास पांच गांव दूर सारलें. ४३. अशा रीतीनें निर्माण केलेल्या त्या पृथ्वीवर राम समाधानपूर्वक राहूं लागला. ४४. म्हणून रामबाणनिर्मित अशा त्या भूमीस रामक्षेत्र म्हणतात. ४५. सह्याद्रीच्या पायथ्याजवळ पवित्र व तीर्थयुक्त अशी ही श्रेष्ठ भूमि आहे. यांत नंतर पुष्कळ खेडीं व नगरें निर्माण झालीं. विविध पुष्प-वृक्षांनीं ही भूमि सुशोभित झाली. जेथें बाण पडला होता, ती पवित्र नगरी रामबाणानें निर्माण झाल्यामुळें बाणावली या नांवानें प्रसिद्ध झाली. अशा रीतीनें केरळ, तुलंग, सौराष्ट्र, कोंकण, करहाट, करनाट व बर्बर ह्या सात प्रदेशांना कोंकण म्हटलें आहे. ४६–४८. येथें अनेक पुण्यवान् पुरुषांचें व इंद्रादिदेवाचें सुद्धां अधिष्ठान असलेलीं पुष्कळ नगरें होतीं. ४९. ही पृथ्वी एकंदर शंभर योजन लांब व पांच योजन रुंद असून येथेंच त्रिभुवन-प्रसिद्ध असें पवित्र गोकर्ण क्षेत्र आहे. ५०.

परशुरामाच्या या भूमीवर लगेच देवांसह उमापति शंकर महाबल या नांवानें राहिले. ५१. कारण कैलासावरून रावणानें नेलेल्या आत्मलिंगाची स्थापना गणेशानें येथेंच केली; म्हणून त्याचें ‘महाबळ’ असें नांव झालें. ५२. गोकर्णाच्या उत्तरेस दहा योजन (चाळीस कोस) अंतरावर प्रसिद्ध नावें या गांवीं सप्तकोटीश्वर नांवाचें लिंग आहे. वसिष्ठादि ऋषींनीं उग्र तप करून सर्व इच्छा सफल करणाऱ्या ह्या अति शुभ्र लिंगाची स्थापना केली होती. ५४.

तत्र रामस्तदा स्थित्वा जामदग्न्यो महामनाः । स विप्रानाव्हयामास नानादेशान्समादिशत् ॥
तत्क्षेत्रे पुण्यनिलये वसतिं कुरुतानघाः । सुखेन निर्भयाः सर्वे विभज्य धरणीं ततः ॥ ५६ ॥
प्रददौ च विशेषेण वेदविद्भ्यो विचक्षणः । वर्षाशनानि सर्वेषामग्रहाराणि भार्गवः ॥ ५७ ॥
आर्यावर्त्तोद्भवानां च वेदवेदांगपारिणाम्[१] । करहाटमहाराष्ट्रतैलंगानां द्विजन्मनाम् ॥ ५८ ॥
गुर्जराणां कान्यकुब्जचित्तपूतात्मनां तदा । पयोष्णीतीरसंस्थानामेतेषामार्यसंज्ञिनाम् ॥ ५९ ॥
कांचीकौशलसौराष्ट्रदेवराष्ट्रेंदुकच्छिनाम् । कावेरीतीरसंस्थानां मध्यगानां[२] द्विजन्मनाम् ॥६०॥
उदीच्याभिरसंस्थानां द्राविडानां तथानघ । दक्षिणापथसंस्थानामवंत्यानां तथैव च ॥ ६१ ॥
मागधानां द्विजातीनां यथादेशं यथाविधि । अहिक्षेत्रोद्भवानां च दैवज्ञानां द्विजन्मनाम् ॥६२॥
प्रददौ सविशेषेण चितपावनसंज्ञिनाम् । दिदेश भार्गवस्तेषामुपदेशं यदापदः ॥ ६३ ॥
भविष्यंति तदास्माकं कर्त्तव्यं स्मरणं द्विजाः । इत्युक्त्वा प्रययौ रामो महेंद्रेऽचलसत्तमे ॥६४॥
विप्राणां रक्षणार्थाय रामोऽयं चिरजीवितः । कस्मिंश्चित्समये विप्राः पूताश्चात्यंतगर्विताः ॥६५॥
अन्योऽन्यं परिपप्रच्छू रामवाक्यमृतानृतम्[३] । स्याद्वा स्मरत तं राममस्मिन् रामोक्तमेव नः ॥६६॥
यदा स्मरत मां विप्रास्तदाहं प्रकटोऽस्मि वः । अतः कुर्युः स्मृतिं[४] पश्येत्युक्त्वा रामं यथास्मरन् ॥
स्मृतमात्रस्तदा रामः समीपमगमत्क्षणात् । अथ विप्रानुवाचेदं किमर्थं स्मरणं कृतम् ॥ ६८ ॥
का वापत्तिः[५] समुद्भूता शीघ्रं वदत भूसुराः । तदा विप्रा भयोद्विग्नाः प्रोचू रामं जगत्पतिम् ॥६९॥
देवास्माकं न चास्त्यापत्प्रत्ययार्थं तव प्रभो । आयाति वा न चायाति रामोऽस्माकं समीपतः ॥
अतः कृतं ते स्मरणमपराधं क्षमस्व नः । इत्युक्तो विप्रसंघस्तु रामः क्रोधसमाकुलः ॥ ७१ ॥
शशापार्थं[६] द्विजवरानेकमतद्विजन्मनः । भवेद्विद्यासु गर्विष्ठा ईर्ष्यान्योन्यं भविष्यति ॥७२॥*
कष्टेव वृत्तिर्भवतु भर्जिते सद्भिजैरपि । भूमिर्न दद्यात्सत्सस्यं याचका भवताप्रियाः ॥ ७३ ॥
याचमानाश्च[७] वो दानं शूद्रा ददतु सेवकाः । भवत क्षत्रियाणां च परप्रेष्यास्तथा द्विजाः ॥७४॥
भविष्यथाल्पविज्ञाना हतपूजापरायणाः । दरिद्रा बहुपुत्राश्च संपन्नाः पुत्रवर्जिताः ॥ ७५ ॥
कन्याविक्रयगृहीतारः पुण्यविक्रयकारिणः । इति दत्वा स वै शापं महेंद्रं गंतुमुद्यतः ॥ ७६ ॥
इति रामवचः श्रुत्वा ब्राह्मणा भयशंकिताः । ऊचुः सर्वे समागत्य तं रामं गंतुमुद्यतम् ॥७७॥
देवदेव जगन्नाथ भवान् भूदेवरक्षकः । त्वयि रामे वदत्येवं कोऽस्मान् रक्षितुमर्हति ॥ ७८ ॥
विशापं देहि भो स्वामिन्सर्वज्ञोऽसि जगत्पते । इति तैरुक्तमाकर्ण्य वचनं चेदमब्रवीत् ॥
प्राप्ते कलियुगे घोरे स्वस्वधर्मविवर्जिते । मदुक्तं सत्यमेवं तु भविष्यति न संशयः ॥ ८० ॥
इत्युक्त्वा तान्समामंत्र्य महेंद्राद्रिमुपागतः । सुखेन वसतिं चक्रे तस्मिन्नद्रौ जगत्पतिः ॥८१॥
स्वस्वग्रामानुप्राप्तास्ते रामदत्तांश्च भूसुराः । भोक्तारः क्षेत्रवृत्तीनि चाग्रहाराणि सर्वतः ॥

इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखंडे ईश्वरगणेशसंवादे पृथ्वीदानप्रशंसानाम षष्ठोऽध्यायः ॥ ६ ॥

---

१ पारगां । २ मध्यमानाम् । ३ ऋतम् । ४ स्मृतिः । ५ वापदि । ६ सद्यापाथ । ७ याचमानेन ।

या स्थानीं राहून उदार परशुरामानें नाना देशांतून ब्राह्मण बोलाविले व त्यांस पवित्र अशा त्या आपल्या भूमींत जागेची विभागणी करून निर्भयपणें व सुखानें राहण्यास सांगितलें. ५५-५६. भार्गवरामानें विशेष करून वेदवेत्त्या ब्राह्मणांना अग्रहार व वर्षासनें दिलीं. ५७.

तसेंच आर्यावर्त, कऱ्हाड, महाराष्ट्र, तेलंग, गुर्जर, कान्यकुब्ज, चित्तपूत, पयोष्णीतीर, कोशल, सौराष्ट्र, देवराष्ट्र, इंदु, कच्छ, कावेरीतीर, मध्यदेश, उत्तरेंतील आभीरदेश, द्राविड, दक्षिणेकडील अवंत्य, मगध, अहिक्षेत्र येथील वेदवेदांगपारंगत अशा द्विजांना व दैवज्ञ द्विजांना अग्रहार–वर्षासनें दिलीं. विशेषतः चित्पावनांना अग्रहार वगैरे देऊन सांगितलें, कीं जेव्हां तुमच्यावर आपत्ति येतील तेव्हां तुम्ही माझें स्मरण करा. असें बोलून परशुरामानें महेंद्र या श्रेष्ठ पर्वतावर प्रयाण केलें. परशुरामानें अग्रहाररूपानें दिलेल्या गांवांत सर्व ब्राह्मण सुखानें क्षेत्रवृत्ति करून राहूं लागले. ५८–८२.

# अथ सप्तमोऽध्यायः ।

## परशुरामक्षेत्रोत्पत्तिः ।

ऋषि उवाच –

भगवन्सूत सर्वज्ञ पुराणेष्वतिकोविद । किमर्थं भार्गवो देशं चकाराब्धौ स्वयंविभुः ॥ १ ॥
उक्तं संक्षेपतः पूर्वं विस्तारं तद्वद प्रभो ।

सूत उवाच –

शृणुध्वमृषयः सर्वे कथयाम्यद्य विस्तरात् ॥ २ ॥
यथा चकार देशं स जामदग्न्योऽमितप्रभः । इदमेव पुरा प्रश्नं नारदायाब्रवीद्गुहः ॥ ३ ॥

नारद उवाच –

जामदग्न्योऽसृजद्वार्द्धिमुत्सार्य क्षेत्रमादरात् । इति प्रोक्तं त्वया पूर्वं कार्तिकेय महामते ॥ ४॥
अब्धिं किमर्थमुत्साद्य क्षेत्रं च कृतवान्मुनिः । एतत्सर्वं विस्तरेण श्रोतुं श्रद्धालवे वद ॥ ५ ॥

स्कन्द उवाच –

पुरा तु भार्गवो रामः क्षत्रियांतकरो विभुः । ईजे[1] स हयमेधेन होतासौ तत्र काश्यपः ॥ ६ ॥
स रामोऽवभृथस्नातो दक्षिणार्थं भृगूद्वहः । सागरांतां वसुमतीं गुरवेऽदान्महामतिः ॥ ७ ॥
ततस्तु ऋत्विजः सर्वे राममूचुरिदं वचः । ब्राह्मणीया धरा सर्वा समुद्रांता भृगूद्वह ॥ ८ ॥
न वस्तव्यं त्वया राम त्वद्दत्ते[2] वसुधातले । इति तेषां वचः श्रुत्वा तथेत्युक्त्वाथ भार्गवः ॥
अर्णवस्थानमाकांक्ष्य प्रययौ पश्चिमां दिशम् । चरन्स वसुधां कृत्स्नां सशैलवनकाननाम् ॥
क्रमादागत्य चाद्राक्षीत्सह्यं पर्वतमुत्तमम् । नानागमतपोनिष्ठैर्मंत्रसिद्धैर्महर्षिभिः ॥ ११ ॥
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैरपि । जुष्टं किन्नरगंधर्वैरप्सरोभिश्च चारणैः ॥ १२ ॥
नानामणिमयैः शृंगैर्नानाधातुविचित्रितैः । नानाद्रुमलतागुल्मैर्नानापक्षिगणैरपि ॥ १३ ॥
नानामृगगणैश्चापि नानाप्रस्रवणैरपि । जंबुभिः पनसैश्चैव कपित्थैश्च रसालकैः ॥ १४ ॥
फलभारानम्रशाखैः शिखरैर्बहुभिर्वृतम् । चांपेयैर्नागपुन्नागैर्बकुलैर्घ्राणतर्पणैः ॥ १५ ॥
सततं रक्तकंठानां कूजितैश्च पतत्रिणाम् । आहूयंतमिव श्रांतान्फलमाहरतेति च ॥ १६ ॥
व्रजंतमिव मातंगैर्गृणंतमिव निर्झरैः । ऋदंतमिव पंचास्यैर्गायंतमिव षट्पदैः ॥ १७ ॥
आरुह्य स गिरेः शृंगं ददर्श ह्युदधिं हरिः । कल्लोलैर्द्विरदाकारैः प्रत्युद्यंतमिवांभसा ॥ १८ ॥
आवर्त्तनिकरैर्जुष्टं गंभीरं वरुणालयम् । सशंखमौक्तिकाकीर्णं विमलोदकपूरितम् ॥ १९ ॥
सचंद्रोडुगणाकीर्णमाकाशमिव निर्मलम् । नानाभूधरजातीभिः सार्वभौममिवांबुधिम् ॥२०॥
मत्स्यैश्च कच्छपैर्नक्रैस्तिमिभिश्च तिमिंगिलैः । यादोभिरन्यैर्विविधैः सेवितं जलमानुषैः ॥ २१ ॥

---

१ ईज्ये । २ त्वद्दत्ते ।

# अध्याय ७ वा

## परशुरामक्षेत्राची उत्पत्ति

ऋषींनें प्रश्न केला, हे भगवन् सूत, आपण सर्वज्ञ असून पुराणज्ञानांत विशेष प्रवीण आहांत. म्हणून भार्गवरामानें समुद्रांत नूतन प्रदेश कां निर्माण केला, हें आपण थोडक्यांत सांगितलें. आतां हाच इतिहास विस्तारपूर्वक सांगा. सूत म्हणाले, ऋषींनो ऐका. आतां मी या इतिहासाचा विस्तार करतां. १–२. पूर्वी नारदानें प्रश्न केल्यावरसुद्धां अत्यंत तेजस्वी अशा परशुरामानें प्रदेश निर्माण केल्याची हीच कथा गुहानें त्यास सांगितली होती. ३.

नारदानें प्रश्न केला, हे महामति कार्तिकेया, परशुरामानें समुद्र मागें सारून नवीन क्षेत्र निर्माण केलें, असें आपण म्हणालांत. ४. आतां आम्ही हाच इतिहास विस्तारपूर्वक ऐकूं इच्छितों. म्हणून तो इतिहास पुनः विस्तार करून सांगा. ५.

स्कंद म्हणाले, पूर्वी क्षत्रियांतकारी समर्थ असा भार्गवराम होऊन गेला. त्यानें केलेल्या अश्वमेध यज्ञांत हवनकर्ता कश्यपऋषि होता. ६. यज्ञाच्या शेवटीं अवभृथ स्नान केल्यावर त्या भृगुकुलोत्पन्न महामति रामानें समुद्रापर्यंतची सर्व पृथ्वी दक्षिणारूपानें आपल्या गुरूला दान केली. ७. तेव्हां ऋत्विज म्हणाले, हे भार्गवा, समुद्रापर्यंतची सर्व पृथ्वी आतां ब्राह्मणांची झाली आहे; व दान केलेल्या पृथ्वीवर राहणें तुला योग्य नाहीं! हें त्यांचें भाषण ऐकून व ठीक आहे असें बोलून तो भार्गवराम समुद्राकडे जाण्यासाठीं पश्चिम दिशेच्या रोखानें अनेक पर्वत व वनें आक्रमण करीत जाऊं लागला. ८–१०. क्रमानें पुढें गेल्यावर त्याला श्रेष्ठ सह्याद्रि दिसला. तेथें वायुभक्षण करून व झडलेलीं पानें खाऊन जगणारे वैदिक, तपोनिष्ठ व मंत्रसिद्ध महर्षि रहात होते. तसेंच किन्नर, गंधर्व, अप्सरा व चारण रहात होते. ११–१२. सह्याद्रीच्या शिखरांवर विविध रत्नें, विविध धातु, नानाप्रकारचे वृक्ष, वेली, झाडी, पक्षीसमूह, मृगगण व झरे होते. तसेंच जांभळ, फणस, कवठ, आंबा इत्यादि अनेक वृक्ष असून ते फळभारांनीं वांकले होते. चंपक, पानवेल, नागकेसर, बकुल अशीं सुगंधी फुलझाडें होतीं. १३–१५.

तो सह्याद्रि कोकिळ इत्यादि पक्ष्यांच्या मंजुळ आवाजानें श्रांत पथिकांना जणुं बोलावून आपलीं गोड फळें खाण्यास सांगत होता. १६. जणुं कांहीं सह्याद्रि हत्तींच्या पायांनीं चालत होता, निर्झरांच्या शब्दांत बोलत होता, सिंहाच्या आवाजानें गर्जना करीत होता व भ्रमरांच्या कंठानें गात होता. १६–१७. अशा त्या पर्वताच्या शिखरावर उभा असलेल्या परशुरामाला गजाकार लाटांच्या योगानें आकाशास भिडणारा समुद्र दिसला. १८. पाण्याचे विशाल भोंवरे असल्यानें गंभीर दिसणारा तो समुद्र म्हणजे वरुणाचें वसतिस्थानच होतें. शंखमोत्यांनीं परिपूर्ण असलेल्या त्या सागराचें पाणी स्वच्छ होतें; म्हणून त्यांत पडलेल्या चंद्र–नक्षत्रांच्या प्रतिबिंबामुळें तो समुद्र म्हणजे जणुं दुसरें स्वच्छ आकाशच! विविध राजकुळांच्या सार्वभौम राजाप्रमाणें तो समुद्र शोभत होता. १९–२०. तो मत्स्य, कूर्म, मगर, मोठमोठे मासे, तिमिंगल व अन्य विविध जलचर प्राणी यांचें आश्रयस्थान होता. २१.

दृष्ट्वानंबुधिं रामः सांत्वपूर्वमभाषत । भो भो जलनिधे दूरमपसर्प त्यजाधुना ॥ २२ ॥
इमं देशमिति प्रोक्तः प्रत्युवाच सरित्पतिः । त्वदाज्ञयैव तिष्ठामि वेलाम्यांक्रम्य[1] भार्गव ॥२३॥
कियान्देशः[2] परित्यज्यो मया जाने न किंचन । मय्युत्सृज महाभाग परशुं त्वत्करे स्थितम् ॥२४
पतेद्यदि तदारभ्य त्यजामि स्थलमग्रतः । इत्याकर्ण्य वचस्तस्य सिंधोरमितविक्रमः ॥ २५ ॥
स्थित्वा सह्यगिरेः शृंगे चिक्षेपः परशुं लघु । कुठारपतनात्स्थानं कृत्वा सीमां सरित्पतिः ॥२६
अपासर्पत्प्रवृद्धांबुनदीव शरदागमे । ततोऽवतीर्य शैलेंद्रशृंगाद्भृगुकुलोद्वहः ॥ २७ ॥
देशमालोकयामास त्यक्तं वारिधिना तदा । सह्यपर्वतमारभ्य योजनत्रितयावधि ॥ २८ ॥
कन्याकुमारी चैकत्र नासिकात्त्र्यंबकः परः । सीमारूपेण विद्येते दक्षिणोत्तरतः शुभौ ॥ २९ ॥
शतयोजनयामं च विभेदे सप्तधा तलम् । आब्रह्मण्ये तदा देशे कैवर्त्तान्प्रेक्ष्य[3] भार्गवः ॥ ३० ॥
छित्वा सबडिशं कंठे यज्ञसूत्रमकल्पयत् । दाशानेव तदा विप्रान् चकार भृगुनंदनः ॥ ३१ ॥
क्षोणीतले यद्यदस्ति पुनस्तत्र ससर्ज तत् । वरं ददौ स्वदेशेभ्यो दुर्भिक्षं मा भवत्विति ॥३२
स्थापयित्वा स्वकीये स क्षेत्रे विप्रान्प्राकल्पयत्[4] । जमदग्न्यास्तदोवाच सुप्रीतेनांतरात्मना ॥३३
बहुधान्यवती भूयाद्भूरियं सस्यशालिनी । धनधान्यसमृद्धाश्च यूयं भवत सर्वदा ॥ ३४ ॥
यदा कदा वा युष्माकं विपत्तिर्जायते भुवि । तदाऽऽह्वयंतु मां सर्वे समावेताः सुखाप्तये ॥३५
आगत्याहं तदा विप्रा वः कार्यं साधये क्षणात् । इति दत्त्वा वरं तेभ्यो जामदग्न्यः कृपानिधिः ॥
गोकर्णं प्रययौ रामो महाबलदिदृक्षया । महाबलेशं संपूज्य विधिवद्भृगुनंदनः ॥ ३७ ॥
किंचित्कालं स चोवास गोकर्णेश्वरसन्निधौ । गते तु भार्गवे रामे तत्क्षेत्रस्था द्विजातयः ॥३८
धनधान्यसमृद्धार्थाः समवेताः कदाचन । रामवाक्यपरीक्षार्थं मंत्रयामासुरंजसा ॥ ३९ ॥
मीलितानां च युष्माकमाहूतिर्मे यदा भवेत् । तदाऽऽगच्छामीति पुरा भार्गवोऽप्युक्तवान् किल ॥ ४० ॥
तत्सत्यमनृतं वेति परीक्षां कुर्महे वयम् । इति सर्वे समालोच्य रामेत्युच्चैः प्रचुक्रुशुः ॥ ४१ ॥
आक्रंदितं तदा तेषां श्रुत्वा रामः कृपानिधिः । प्रादुरासीत्पुरो भागे देवर्षिर्भार्गवः स्वयम् ॥४२
श्रीभार्गव उवाच –
किमर्थं क्रंदितं विप्रा भवद्भिर्मीलितैरिह । किं दुःखं भवतामद्य नाशयाम्यचिरादहम् ॥ ४३ ॥
स्कन्द उवाच –
इति तस्य वचः श्रुत्वा प्रत्यूचुस्ते भयान्विताः । न किंचिदपि संप्राप्तं दुःखं त्वत्कृपया विभो ॥
जल्पितं भवता सत्यमनृतं वेति शंकितैः । केवलं तु परीक्षार्थं क्रंदितं मीलितैः प्रभो ॥ ४५ ॥
इति तेषां वचः श्रुत्वा क्रोधसंरक्तलोचनः । निर्दहन्निव नेत्राभ्यामालोकयत भूसुरान् ॥ ४६ ॥
शशाप तान्तदा विप्रान् जमदग्निकुमारकः । कदन्नभोजिनो यूयं चैलखंडधरा भुवि ॥ ४७ ॥
अप्रसिद्धावनीस्थाने[5] श्लाघनीया भविष्यथ । शप्त्वेत्थं भार्गवो रामो महेंद्रं तपसे ययौ ॥ ४८ ॥
गते तु भार्गवे रामे तत्क्षेत्रस्था द्विजातयः । शापग्रस्ताः सुदुःखार्ताः शूद्रप्रायास्तदाभवन् ॥४९

---

१ आक्रम्य । २ कियादेशान् । ३ प्रेक्ष्य । ४ प्रकल्पयत् । ५ अप्रसिद्धा० ।

अशा त्या समुद्राकडे पाहून परशुराम त्याला शांतपणें म्हणाला, हे जलनिधे, दूर हो, आतां हा प्रदेश सोडून दे. हें ऐकून समुद्र म्हणाला, हे भार्गवा, मी तुझ्याच आज्ञेवरून हा समुद्रकिनारा व्यापला होता. आतां किती प्रदेश मी सोडून द्यावा, हें मला माहीत नाहीं. यास्तव हे महाभागा, तुझ्या हातांतील परशु माझ्यावर फेंक. २३–२४. जेथें तुझा बाण पडेल, तेथपर्यंतचा भाग मी मुक्त करतों. हें समुद्राचें वचन ऐकून महापराक्रमी परशुरामानें सह्याद्रीच्या शिखरावरून लीलेनें बाण फेंकला. ज्याप्रमाणें वर्षाकाळीं दुथडी भरून वाहणारी नदी, शरद् ऋतूंत आपला व्याप्त किनारा सोडून देते, त्याप्रमाणें परशुपतनापर्यंतचा भूभाग समुद्रानें मुक्त केला. नंतर सह्याद्रीच्या शिखरावरून उतरून परशुरामानें समुद्रमुक्त भाग पाहिला. हा भूभाग सह्याद्रीपासून समुद्रापर्यंत तीन योजनें ( १२ कोस ) रुंद होता. २५–२८.

या भागाच्या दक्षिण सीमेवर कन्याकुमारी व उत्तर सीमेवर नासिक–त्र्यंबकेश्वर होतें. अशा शंभर योजन ( ४०० कोस ) प्रदेशाचे परशुरामानें सात भाग केले, २९–३०. व तो महेंद्र पर्वतावर तपश्चर्येस गेला. भार्गवराम निघून गेल्यावर त्या क्षेत्रांतील द्विजलोक शापग्रस्त होऊन अत्यंत दुःखाकुल व शूद्रप्राय झाले. ४८–४९.

गते तु कतिचित्काले रविवंशसमुद्भवः । मयूरवर्मा नृपतिस्तं देशं प्रशशास ह[१] ॥ ५० ॥
शूद्रप्रायान् द्विजान्प्रेक्ष्य शिखिवर्मा स्वराष्ट्रजान् । अहिच्छत्रं समागत्य तत्रत्यान् द्विजपुंगवान् ॥
आनीय स्वपुरं तेभ्यो ददौ ग्रामान्मुदान्वितः । द्वात्रिंशद्ग्रामकान् सर्वान् शिखिवर्मा महीपतिः ॥
इति जलनिधितो भुवं च लब्ध्वा जनपदपत्तनदेवतालयैश्च ।
सहितममलदेशमाशु चक्रे तरुविटपैर्विविधैश्च पुष्पिताग्रैः ॥ ५३ ॥

इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखंडे परशुरामक्षेत्रोत्पत्तिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

# अथ अष्टमोऽध्यायः ।

## ग्रामनिर्णयः ।

नारद उवाच –

मयूराख्यो महावीर्यः सूर्यवंशसमुद्भवः । कथं स्थापितवान् विप्रान् विस्तराद्वद सुव्रत ॥ १ ॥

स्कन्द उवाच –

मयूरनामनृपतिर्हेमांगदकुमारकः । अहिक्षेत्रस्थितान्विप्रानागतान्द्विजपुंगवान् ॥ २ ॥
सपुत्रपौत्रसहितान् संपूज्य विविधान्नृपः । प्रसादयित्वा तान् विप्रान् धनसत्कारभोजनैः ॥ ३ ॥
अग्रहारान् चकारासौ द्वात्रिंशद्ग्रामभेदतः । तत्र तत्र द्विजवरान् स्थापयामास भूपतिः ॥ ४ ॥
कदंबकानने त्रीणि गोकर्णे वेदसंख्यया । शुक्तिमत्यास्तटे सम्यक् द्वयं ग्रामं चकार सः ॥ ५ ॥
सर्वशास्त्रेषु निरतानग्निहोत्रसमन्वितान् । स्थापयामास तान्विप्रान् रविवंशसमुद्भवः ॥ ६ ॥
ध्वजपूर्यां च संस्थाप्य सीताया दक्षिणे तटे । अजपूर्यां चतुर्ग्रामान् चकार विधिवन्नृपः ॥ ७ ॥
अनंतेशसमीपे तु दश ग्रामान् चकार सः । तच्छेषं च समाहूय नेत्रावत्युत्तरे तटे ॥ ८ ॥
ग्राममेकं चकारासौ संस्थाप्य विधिवन्नृपः । तन्मध्ये गजपूर्यां च नृसिंहश्च प्रतिष्ठितः ॥ ९ ॥
प्राच्यां सिद्धेश्वरो यत्र पश्चिमे लवणांबुधिः । उत्तरे कोटिलिंगेशो यत्र सीतास्ति दक्षिणे ॥१०॥
स वैकूटग्राममिति विख्यातं जगतीतले । तच्छेषमिति पूर्वोक्तं नेत्रावत्युत्तरे तटे ॥ ११ ॥
नवग्रामं चकारासौ श्रोत्रियेभ्यः प्रदत्तवान् । इत्थं निर्माय नृपतिरग्रहारान्पृथक् पृथक् ॥ १२
ब्राह्मणेभ्यः प्रदत्वाथ स्वस्थचित्तोऽभवत्तदा । एतेषु ग्राममुख्येषु स्थित्वा ब्राह्मणपुंगवाः ॥१३॥
संतोषमावहन् राज्ञे वेदाध्ययनपारगाः । शिवपूजापरा नित्यं विष्णुपूजापरायणाः ॥ १४ ॥
महागणपतेश्चापि प्रसादान्कांक्षिणस्तथा । षट्कर्मनिरताः शांताः सर्वशास्त्रेषु कोविदाः ॥ १५
मंत्रशास्त्रेषु निरता ज्योतिःशास्त्रविशारदाः । पंचयज्ञपरा नित्यं सच्चरित्रा दयालवः ॥ १६ ॥
श्रौतस्मार्तसदाचारनिष्ठाः सत्कर्मतत्पराः । वर्णाश्रमोदितान्धर्मान् नित्यं चक्रुरतंद्रिताः ॥
मयूरवर्मनृपतौ क्षोणीं शासति धर्मतः । प्रहृष्टोऽभूत्तदा लोको यथा कृतयुगे पुरा ॥ १८ ॥

१ वे प्रशासह

अशा ह्या प्रदेशावर मयूरवर्मा राजा राज्य करीत होता. त्याचा पुत्र शिखिवर्मा तेथें पूर्वी आणलेले ब्राह्मण शूद्र झालेले पाहून पुनः अहिक्षेत्राला आला व तेथील श्रेष्ठ ब्राह्मणांना आपल्या नगरांत आणून त्यानें वस्ती करण्यास त्यानां बत्तीस गांव दिले. ५०–५२.

याप्रमाणें समुद्रापासून भूप्रदेश मिळाल्यावर गावें, नगरें, देवालयें व विविध पुष्पवृक्ष यांनीं तो भू–भाग संपन्न केला. ५३.

# अध्याय ८ वा

## ग्रामनिर्णय

नारद म्हणाला, महापराक्रमी अशा सूर्यवंशी मयूरवर्मा राजानें ब्राह्मणांची कशा प्रकारें स्थापना केली, हा भाग हे सुव्रता, विस्तारानें सांग. १.

स्कंद म्हणाला, हेमांगदपुत्र मयूरवर्मा ह्या राजानें अहिक्षेत्रांतून पुत्रपौत्रांसह आलेल्या श्रेष्ठ व विविध ब्राह्मणांचें विधियुक्त स्वागत करून व त्यांना धनधान्य देऊन संतुष्ट केलें. २–३. त्यांना बत्तीस गांव भेटीदाखल देऊन त्यांत त्यानें त्या द्विजश्रेष्ठांची व्यवस्था केली. ४.

ती पुढीलप्रमाणें — कदंबकानन तीन, गोकर्ण चार व शुक्तिमती नदीच्या तीरावर दोन असे नऊ गांव ध्वजपुरीमध्यें सर्वशास्त्रसंपन्न व अग्निहोत्री ब्राह्मणांना दिले. ५–६. सीता नदीच्या दक्षिण तीरावर[१] अजपुरीमध्यें चार गांवें दिलीं. ७. अनंतेशाजवळ दहा गांवें तयार केलीं. राहिलेल्या ( नऊ ) द्विजांना बोलावून नेत्रावती नदीच्या उत्तर तटावर एका गांवात त्यांची स्थापना केल्यावर तेथील गजपुरीमध्यें नृसिंहदेवाची स्थापना केली. ८–९. पूर्वेस सिद्धेश्वर, पश्चिमेस समुद्र, उत्तरेस कोटिलिंगेश व दक्षिणेस सीता नदी असलेला वैकूट नांवाचा गांव पृथ्वीवर प्रसिद्ध आहे. या गांवाच्या उत्तरेस नेत्रावती नदी असून येथेंच नऊ गांवें तयार करून तीं श्रोत्रियांना दिलीं. अशा रीतीनें राजानें भेटीदाखल बत्तीस गांवें निर्माण केलीं. ८–१२.

याप्रमाणें बत्तीस गांवें ब्राह्मणांना देऊन झाल्यावर राजाच्या मनाचें समाधान झालें. या प्रमुख गांवांत ते श्रेष्ठ ब्राह्मण राहून व वेदाध्ययन करून शिव–विष्णूची पूजा करूं लागले. महागणपतिप्रसादाची आकांक्षा करणारे ते शास्त्रपारंगत शांत ब्राह्मण षट्कर्मे व्यवस्थित पार पाडीत होते. १३–१५. चारित्र्यसंपन्न व दयाळू असे ते ब्राह्मण मंत्रशास्त्र व ज्योतिःशास्त्रही जाणत होते. रोज ( ब्रह्म–देव–पितृ–भूत- मनुष्ययज्ञ ) असे पंचमहायज्ञ करीत होते. १६.

श्रौत–स्मार्त विधीप्रमाणें आचारधर्म पाळणारे, सदाचारी, निष्ठावान् असे ते ब्राह्मण निरलसपणें नेहमीं वर्णाश्रम धर्म पाळीत होते. १७. मयूरवर्मा पृथ्वीचें राज्य करीत असतां कृतयुगांतील लोकांप्रमाणें सर्व लोक आनंदी होते. १८.

---

१ शिर्सीजवळ वनवासी

अथ कालेन महता शिखिवर्मा महीपतिः । कलिनाक्रांतमालोक्य जगत्सर्वं विचक्षणः ॥ १९ ॥
राज्यभारममात्येषु विन्यस्य तपसे ययौ । चंद्रांगदं स्वतनयं बालं सप्रेक्ष्य[1] नारद ॥ २० ॥
तदा तत्क्षेत्रनिलया ब्राह्मणास्त्वमितप्रभाः । मीलित्वा मंत्रयामासुर्द्वात्रिंशद्ग्रामवासिनः ॥२१
राजपुत्रः शिशुरयं मंत्रिवर्यास्तु[2] प्रेक्षकाः । तस्मात्पालनकृत्कोऽपि नास्त्यत्र विषये बत ॥२२॥
वयमद्यैव गच्छामस्त्यक्त्वा देशमिमं पुनः । स्थित्युचित[3]महीच्छत्रं मा भूत्कालविपर्ययः ॥२३॥
इति सर्वे समालोच्य जग्मुस्ते च यथागताः । ततस्तत्र स्थिता विप्रा आगता ब्राह्मणैः सह ॥
इत्याहुर्बंधुकृत्यं ते गोराष्ट्रनिलया यतिः[5] । प्रत्याख्यातास्तु तैत्रत्यै[4]र्गोराष्ट्रादागता द्विजाः ॥२५*
तेषां ग्रामाद्बहिर्देशे वासं चक्रुः समेत्य ते । चिरकाले गते तत्र शिखिवर्मसुतः सुधीः ॥ २६ ॥
चंद्रांगद इति ख्यातो विचारमकरोत्तदा । मत्पित्रा तु समाहूता ब्राह्मणाः क्व गता इति ॥२७
चारैः सुबुबुधे विप्रान् यथापूर्वं गताः पुनः । चंद्रांगदोऽपि राजासावहिच्छत्रं गतः पुनः ॥२८॥
पूर्वमाकारितान्विप्रान्समेत्योवाच भूपतिः ।

चंद्रांगद उवाच –

गत्वा मद्विषयं विप्राः किमर्थं पुनरागताः ॥ २९ ॥
इति निर्भयमेधावी प्रश्नं[6] चक्रे महामतिः । ग्रामेषु गृहभेदानि पुरश्चूडां तथैव च ॥ ३० ॥
इदं चिन्हं करोमीति तेषां[7] मतिमतां वरः । सचिवैः सह निश्चित्य पुरचूडां चकार सः ॥ ३१॥
तथैव गृहभेदानि चकार नृपनंदनः । कारेउरूग्रामके तु भेदान् चत्वारिसंख्यकान् ॥ ३२ ॥
तथा कर्कोडिमध्ये तु ह्यष्टभेदान्चकार सः । तथैव मरणे ग्रामे द्वितीयं भेदविस्तरम् ॥ ३३ ॥
कानुवीनां सुमध्ये च भेदौ द्वौ द्वौ च पार्थिवः । पाडिग्रामे वेदसंख्यास्तद्वत्कोडीलनामके ॥
मागवेतु ग्रामके तु वेदवद्भेदमंजसा । मित्रनाडुग्राममध्ये तद्वत्पार्थिवनंदनः ॥ ३५ ॥
निर्मार्गेकग्राममध्ये चकार ऋषिसंख्यकम् । सीमंतुरग्राममध्ये नव भेदान्चकार सः ॥ ३६ ॥
शिवबेल्यां[8] विशेषज्ञः त्रिंशद्भेदं शतोत्तरम् । षष्ठादशादेतदेच्चं[9] चत्वारिंशच्च मध्यमाः ॥ ३७ ॥*
अथाष्टावजपूर्यां च तथा नीलावरे कृताः । कूटेऽष्टौ गृहभेदाश्च द्वयं स्कंदपुरे कृतम् ॥ ३८ ॥
पश्चिमे षोडश ग्रामा एवं भेदान्विभज्य च । श्रीपाडिग्राममुख्ये तु पंच भेदान् चकार सः ॥
तथैव कौंडिलग्रामे द्वौ द्वौ भेदौ कृतौ मुदा । कारमूरुग्राममध्ये द्वौ भेदावाह पार्थिवः ॥४०॥
तथैव चोज्जये ग्रामे भेदानाह स षोडश । तदर्धं कर्तुमार्गे तु भेदान्याह महीपतिः ॥ ४१ ॥
चीर्कोडीग्रामके त्वन्यं सदसद्भेदमाह सः । वामीजुरुग्रामके तु द्वयं भेदं चकार सः ॥ ४२ ॥
पुरग्रामे च चत्वारि बल्लमंजे त्रयं तथा । हैनाडुग्रामके नाम वेदवद्भेदमाचरेत् ॥ ४३ ॥
तथैव इच्चुके ग्रामे षड्भेदानाह भूभुजः । केमिंजे भेदमेकं च पालिंजे द्वितयं तथा ॥ ४४ ॥
शिरिपाडिमहाग्रामे पंच भेदांश्चकार सः । कोडिपाडिग्राममध्ये भेदं स ऋषिसंख्यकम् ॥
पूर्वषोडशमुख्येषु ग्रामेषु नृपशेखरः । भेदानेवं विधायाथ स्वस्थचित्तोऽभवत्तदा ॥ ४६ ॥

१ संप्रेक्ष्य । २ मन्त्रिवायास्तु प्रेक्षिकाः । ३ स्थितो० । ४ तत्रैस्वै । ५ इति । ६ तासां । ७ मंहसः । ८ शिवबल्यां । ९ अष्टादशादि तद्वच ।

पुष्कळ कालानंतर त्या चाणाक्ष शिखिवर्मा राजानें सर्व जग कलीनें आक्रांत झालेलें पाहून चित्रांगदाचें वय लक्षांत घेऊन सर्व राज्यकारभार प्रधानांकडे दिला व स्वतः तपस्येसाठीं गेला. ९-२०. म्हणून बत्तीस गांवचे रहिवासी ते तेजस्वी ब्राह्मण एकत्र जमले व त्यांनीं विचार ला, कीं राजपुत्र वयानें लहान असून श्रेष्ठ मंत्री केवळ प्रेक्षक आहे. या देशांत पालनकर्ता णी नाहीं. २१-२२.

म्हणून हा देश सोडून परत अहिच्छत्र देशांत जाणेंच उचित होय. वृथा कालक्षेप रणें योग्य नव्हे. २३. असा विचार करून ते सर्व ब्राह्मण आपल्या देशीं गेले. पण तेथील ाह्मणांनीं गोराष्ट्रांतून आलेल्या या ब्राह्मणांना आश्रय दिला नाहीं, व त्यांना गांवाच्या बाहेरच ाहाण्यास भाग पाडलें. असा पुष्कळ काळ निघून गेल्यावर शिखिवर्माचा बुद्धिमान् पुत्र चेत्रांगद विचार करूं लागला, कीं वडिलांनीं आमंत्रण देऊन आणलेले ते ब्राह्मण कोठें गेले ? ंव्हां हेरांच्या मार्फत त्याला सर्व ब्राह्मण आपल्या पूर्वीच्या देशीं निघून गेल्याचें समजलें. म्हणून चेत्रांगद पुनः अहिच्छत्रांत गेला. २४-२६. व त्या सर्वांना एकत्र जमवून तो निःशंकपणें म्हणाला, ब्राह्मणहो, तुम्ही माझ्या देशांतून परत कां आलांत ? तुमच्या सर्व गांवांत निरनिराळीं घरें करून प्रत्येक घरासमोर चूडाचिन्ह करतों. याप्रमाणें त्यांना समजावून त्यानें सचिवां-बरोबर विचारविनिमय केला, निरनिराळीं घरें निर्माण केलीं, आणि त्या घरांसमोर चूडाचिन्हें केलीं. अशा रीतीनें कारेऊरू ग्राम चार, कार्काडी आठ, मरणे दोन, कानुनी दोन, सुमध्य दोन, पाडीग्राम चार, कोडिल चार, मागवे चार, मित्रनाडु चार, निर्मार्गिक सात, सीमंतुर नऊ, शिवबली एकोणतीस, अजपुरी आठ, नीलावर आठ, कूट आठ व स्कंदपूर येथें दोन याप्रमाणें पश्चिमेकडे सोळा प्रमुख ग्रामांत दोनशें सहा उपग्रामांची विभागणी करून श्रीपाडि पांच, कौंडिल चार, कारमूरु दोन, उज्जय सोळा, कर्तुमार्ग आठ, चिर्कोडी चार, वामीजुरु दोन, पूर चार, बह्ममंज तीन, हैनाडु चार, इचुक सहा, केमिंज एक, पालिंज दोन, शिरपाडि पांच आणि कोडिपाड येथें सात अशी पूर्वेकडील सोळा प्रमुख गांवांत उपगांवें तयार करून दिल्यावर त्याच्या मनाला समाधान वाटलें. २७-४६.

एतेषां ग्रामभेदानि पूर्वषोडशकेषु च । संदेहो नात्र कर्त्तव्यस्त्रिसप्ततिरिति ध्रुवम् ॥ ४७ ॥
तथैव पश्चिमे हस्ते षोडशैव न संशयः । ग्रामेषु गृहभेदानि षट्च तत्र शतद्वयम् ॥ ४८ ॥
एवं च गृहभेदानि कृत्वा मतिमतां वरः । द्विजान्स्थापितवान् तत्र शांतचित्तोऽभवत्तदा ॥
अथ ते ब्राह्मणाः सर्वे वासं चक्रुरतंद्रिताः । द्वात्रिंशद्ग्राममुख्येति ख्यातिं ते लेभिरे पराम् ॥
द्वात्रिंशद्ग्राममाहात्म्यं संक्षेपेणोदितं मया । इदानीं तु महाप्राज्ञ किमन्यच्छ्रोतुमिच्छसि ॥
इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखंडे ग्रामनिर्णयो नाम अष्टमोऽध्यायः ॥ ८ ॥

# अथ नवमोऽध्यायः ।

## शिवनारायणस्तोत्रम् ।

ऋषय ऊचुः—
सूत सर्वपुराणार्थविज्ञान विजितेंद्रिय । तव मुखेंदोर्गलितं कथापीयूषमंगलम् ॥ १ ॥
पीत्वा श्रुतिपुटैर्भूयः पिपासा वर्धते हि नः । अतः कथामृतं पुण्यं[1] पापातिभयार्तिहम् ॥ २ ॥
रहस्यं विविधं ज्ञातं त्वया मतिमतां वर । श्रुतानि सकलान्यद्धा धर्माणि त्रिविधानि च ॥३॥
द्वात्रिंशद्ग्रामनामानि गृहभेदानि यानि च । पूर्वमेव त्वयैवोक्तं पातित्यग्रामसंज्ञकम् ॥ ४ ॥
यद्यदस्ति विशेषं तच्छ्रोतुमिच्छामहे वयम् ।
सूत उवाच —
शृणुध्वमृषयः सर्वे सावधानेन चेतसा ॥ ५ ॥
इदमेव पुरापृच्छच्छौनकं धर्मकोविदम् । जन्मेजयस्य[2] तनयः शतानीको महीपतिः ॥ ६ ॥
व्यासोपदेशात्सततं पुराणश्रवणे युतः । कलिनाविष्टमालक्ष्य भारतं खंडमुत्तमम् ॥ ७ ॥
क्षेत्रतीर्थैकनिरतो यज्ञकर्मकृतादरः । शिवपादारविंदैक्यः शिवभक्तिरतंद्रितः ॥ ८ ॥
शतानीक उवाच —
सर्ववेदांततत्त्वज्ञः सर्वशास्त्रार्थकोविदः । तव वागमृतं पीत्वा न तृप्तिर्जायते कथम् ॥ ९ ॥
भार्गवस्य प्रभावं च तस्य देशस्य विस्तरम् । द्वात्रिंशद्ग्रामनामानि तथा तद्दैवतानि च ॥१०॥
विस्तरेण त्वया ब्रह्मन् श्रोतुं सर्वं समग्रतः । उपग्रामाणि संतीति पुरा यत्कथितं त्वया ॥११
तान्यहं श्रोतुमिच्छामि ग्रामाणां चाधिदैवतम् ।
शौनक उवाच —
पुरा क्रोडमुनिर्नाम सत्यवादी जितेंद्रियः ॥ १२ ॥
चिरकालं तपस्तप्त्वा शंकरं श्रीशमव्ययम् । स्वाधीनं कारयित्वाथ स्वनामाकारितां पुरीम् ॥
स्वमुद्रांकिततीर्थं च निर्माय सुमनोहरम्[3] । आश्रमं तत्र कृत्वाथ निनार्य[4] बहुवत्सरान् ॥ १४ ॥
कलियुगे च संप्राप्ते नैमिषारण्यमाश्रितः[5] । संक्षेपेणात्र वक्ष्यामि सावधानमनाः शृणु ॥ १५ ॥

---
१ पुण्य । २ जन्मन् । ३ स्व० । ४ निनयेद् । ५ श्रितान्

पूर्वेकडे सोळा प्रमुख गांवांत ब्याहात्तर उपग्राम तयार केले व पश्चिमेलाही सोळा ग्राम व नसें सहा उपग्राम निर्माण केले. ४७–४८. याप्रमाणें त्या श्रेष्ठ बुद्धिमंतानें निरनिराळीं घरें र्माण करून त्यांत त्या सर्व ब्राह्मणांची स्थापना केल्यावर त्याचें समाधान झालें. ४९.

नंतर त्या बत्तीस गांवांत सर्व ब्राह्मण निश्चितपणें राहूं लागले, यामुळें त्यांची बत्तीस ामप्रमुख म्हणून ख्याति झाली. ५०.

याप्रमाणें या ग्रामांचें माहात्म्य मी तुला थोडक्यांत सांगितलें आहे; आतां हे बुद्धिमंता, ला आणखी काय ऐकण्याची इच्छा आहे? ५१.

# अध्याय ९ वा

## परशुरामकृत शिवनारायण स्तोत्र

ऋषि म्हणाले, हे सूता, तुला सर्व पुराणांचे अर्थ माहीत असून तूं जितेंद्रिय आहेस. तुझ्या मुखचंद्रांतून स्रवलेलें मंगल असें कथामृत दोन्ही कानांनीं भरपूर ऐकूनसुद्धां, आणखी पवित्र व पाप–भीतीचें दुखः दूर करणारें कथामृत ऐकण्याची तृष्णा वाढतच आहे. १–२. हे श्रेष्ठ बुद्धिमंता, तुला विविध रहस्यें माहीत आहेतच. तसेंच विविध धर्मकर्में तूं ऐकलेलीं आहेस. बत्तीस ग्राम व उपग्रामें तूं सांगितलींस, तें मी ऐकलें. यापूर्वीं तूं पातित्यग्रामाचें नांव घेतलेंस, त्याविषयीं विशेष मी ऐकूं इच्छितों. सूत म्हणाला, ऋषीहो, तुम्ही हा इतिहास एकाग्र मनानें ऐका. ३–५.

पूर्वीं जनमेजयपुत्र शतानीक राजानें धर्मज्ञानी अशा शौनकाला हाच प्रश्न केला होता. कारण व्यासमहर्षींच्या उपदेशानें तो सतत पुराण श्रवण करीत असे. तेव्हां हें श्रेष्ठ भारतवर्ष कलीनें ग्रासलेलें पाहून तो तीर्थयात्रा करूं लागला. श्रद्धेनें यज्ञ करूं लागला, तो शिवभक्त असल्यानें नेहमीं शंकराच्या चरणकमलापाशीं लीन झाला. ७–८.

शतानिकानें प्रश्न केला, कीं शौनक ऋषि, तुम्ही सर्व वेदांचें तत्त्व जाणतां. सर्व शास्त्रार्थांत पारंगत आहांत. तुमची अमृतवाणी आम्ही कितीही प्यालों, तरी श्रवणाची तृषा शांत होत नाहीं. ९. भार्गवाचा प्रभाव, त्यानें केलेला देश–विस्तार, बत्तीस गावें, त्यांचीं दैवतें हें सर्व आम्ही विस्तारपूर्वक ऐकूं इच्छितों. म्हणून पूर्वीं निवेदिल्याप्रमाणें त्या उपग्रामांची माहिती व त्यांची प्रमुख दैवतें यांविषयीं आम्ही ऐकूं इच्छितों.

शौनक म्हणाले, सत्यवक्ता व जितेंद्रिय असा एक क्रोडमुनि होता. त्यानें पुष्कळ काळ तप करून अव्यय अशा श्रीश व श्रीशंकर दैवतांना वश केलें, व आपल्या नांवाची एक नगरी वसविली. १०–१३. तेथेंच समुद्रांकित तीर्थ व अत्यंत मनोहर आश्रम निर्माण करून त्यांत त्यानें पुष्कळ वर्षें व्यतीत केलीं. १४.

नैमिषारण्यवासी ऋषींनो, कलियुग सुरू झाल्यावर घडलेला हा पुढील इतिहास सांगतों. लक्ष देऊन ऐका. १५.

कदाचिद्भार्गवः श्रीमान् सर्वक्षत्रकुलांतकः । गोकर्णं गंतुकामश्च महेंद्राद्रौ जगाम सः ॥१६
तत्र तत्र च तीर्थानि ऋषीणामाश्रमांस्तथा । शनैः पश्यन्नमेयात्मा देवतायतनानि च ॥१७
ततः सह्याद्रिशिखरमदूरे दृष्टवान् मुनिः । दिव्यौषधितपोयोगं मंत्रसिद्धैर्महर्षिभिः ॥ १८ ॥
जुष्टं किन्नरगंधर्वैरप्सरोभिश्च चारणैः । नानारत्नमयैः शृंगैरिंद्रनीलैर्विचित्रकैः ॥ १९ ॥
नानाफलप्रस्रवणैर्नानाकंदरसानुभिः । रुचिरं विहरंतीनां[1] रमणैः सिद्धयोषिताम् ॥ २० ॥
मयूरकोकिलयुतं धातुभिश्च समूर्छितम् । अजस्रं रक्तकंठानां कूजितैश्च पतत्रिणाम् ॥ २१ ॥
आव्हायंतमिव श्रांतान् कांतैः कामुदुघैर्द्रुमैः । व्रजंतमिव मातंगैर्गृणंतमिव षट्पदैः ॥ २२ ॥
मांदारैः पारिजातैश्च रसालैश्चोपशोभितैः । तमालैः शालतालैश्च कोविदारासनार्जुनैः ॥ २३ ।
चूतैः कदंबनिंबैश्च नागपुन्नागचंपकैः । पाटलाशोकबकुलैः कुंदैः कुरबकैरपि ॥ २४ ।
पनसोदुंबराश्वत्थप्लक्षन्यग्रोधतिंदुकैः । पुण्यैरौषधिभिः पूगै राजपूगैश्च जंबुभिः ॥ २५ ॥
आम्रातकैरग्निशिखैः प्रियालैर्मधुकाननैः । द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ २६ ॥
शृंगैर्मृगैर्मृगेंद्रैश्च गजेंद्रैर्गजशल्यकैः । गवयैः शरभैर्व्याघ्रैरुरुभिर्महिषादिभिः ॥ २७ ॥
मृगनाभिभिराकीर्णं विशिष्टं चमरीमृगैः । कदलीखंडसंरुद्धनलिनीपुलिनैस्तथा ॥ २८ ॥
निर्झरैश्चामरच्छत्रैः कदलीकेतुभिस्ततः । विराजमानं शैलेंद्रं दृष्ट्वा हृष्टमना मुनिः ॥ २९ ॥
अवतीर्य ददर्शाथ तौलवं देशमुत्तमम् । तत्क्षेत्रं प्राप्तवान् रामो मेधावी भृगुनंदनः ॥ ३० ॥
ईशनारायणं सम्यक् पूजयामास शास्त्रतः । कमलैर्लक्षसंख्याकैः पूजयामास भार्गवः ॥ ३१ ॥
नानोपचारैर्विविधैर्वेदोक्तमंत्रराशिभिः । स्तोत्रं कर्तुं समारेभे शंकरं श्रीशमव्ययम् ॥ ३२ ॥

परशुराम उवाच –

स्वाराजपूर्ण[2]सुरकोटिकिरीटिराजन्नीरांजनीयनिजपादसरोरुहाय ।
शस्त्रास्त्रवेदपतये वरशंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३३ ॥
माराहिताय मधुकैटभदारणाय ध्यानादरप्रतरकंठतनुप्रभाय ।*
साराय सर्वजगतामपि शंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३४ ॥
हरा[3]नुरागधरणीधरराजकन्या–ताराकरेंद्रतनयावशमानसाय ।
सूर्येन्दुवन्हिनयनाय च शंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३५ ॥
आराधनाप्रणयिनामनिशं जनानां कारागृहे कलयते कलिकल्मषाणि ।
नारायणाय नरकच्छिदशंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३६ ॥
नम्रस्थिताकुलनपांचल[4]मानदाय नामावशेषितसुरारिमहासुराय ।*
नाथाय सर्वजगतामपि शंकरश्रीनारायणाय विमलाय नमःशिवाय ॥ ३७ ॥

१ विहर० २ पूर्त । ३ धारा०। ४ पांचलदेति माता ।

सर्वक्षत्रियान्तकारी तो श्रीमान् भार्गव गोकर्णास जाण्यासाठीं महेंद्र पर्वतावर गेला. १६. सर्वत्र तीर्थें, ऋषींचे आश्रम व देवालयें सावकाश पहात पहात उदार परशुराम संचार करीत असतां त्या मुनीला सह्याद्रि शिखर दिसलें. त्या शिखरावर दिव्य वनस्पति होत्या व तपस्वी अनेक राहात होते. तसेंच मंत्रसिद्धि संपादन केलेले महर्षि, किन्नर, गंधर्व, अप्सरा व चारण यांनीं त्याचा आश्रय केला होता. नाना रत्नें व इंद्रनीलमणी यामुळें तें शिखर रंगीबेरंगी दिसत होतें. तेथें विविध फळें, झरे, दऱ्या होत्या. आपल्या प्रियकरांसह सिद्धस्त्रिया तेथें विहार करीत होत्या. मोर व कोकिळ यांचा आवाज सर्वत्र घुमत होता. तसेंच कोकिळ व अन्य पक्षी यांच्या आवाजानें तो सह्याद्रि श्रांत पथिकांना बोलावीत होता. तेथें सुंदर कल्पवृक्ष होते. तो मातंगाच्या पायांनीं चालत होता व भ्रमरांच्या मधुर गुंजारवानें बोलत होता. तेथें मंदार, पारिजात, आम्र, तमाल, शाल, ताल, कोविदार, आसन, अर्जुन, चूत, कदंब, निंब, नागचाफा, पुंनाग, चंपक, रक्तलोध्र, अशोक, बकुल, कुंद, कुरबक ( तांबडी कोऱ्हाटी ), फणस, औदुंबर, अश्वत्थ, पिंपरी, वड, तिंदुक, ( टेंभुर्णी ), पवित्र वनस्पती, पूग ( पोफळ ), राजपूग ( मोहाची सुपारी ), जांभूळ, आम्रातक ( आंबाडा ), अग्निशिख ( केशर ), प्रियाल, मधुकानन (?) इत्यादि अनेक वृक्षांच्या जाती, वेणु व कीचक यांमुळें तो पर्वत शोभत होता. १७–२६.

तसेंच मृग, मृगेंद्र, गजेंद्र, शाळू, गवय, शरभ, वाघ, रुरु, महिष, कस्तुरीमृग, चमरीमृग इ. पशु तेथें होते. झरे, चामर, छत्र, केळीचे ध्वज यांनीं तो सुंदर दिसत होता. पर्वत पाहून मुनि आनंदित झाला व तेथून खालीं उतरला. तेव्हां त्यास श्रेष्ठ तौलव देश दिसला. बुद्धिमान् अशा त्या भार्गवरामानें त्या क्षेत्रांत पोंचल्यावर शंकर व नारायण यांची शास्त्रोक्त विधीनें लक्षावधि कमळांनी, नाना उपचारपूर्वक वेदोक्त मंत्र म्हणून पूजा केली. अव्यय अशा लक्ष्मीपति नारायण व शंकराची स्तुति करण्यास आरंभ केला. २७–३२.

परशुराम म्हणाला, स्वर्गांतील कोट्यवधि देव आपल्या रत्नजडित मुकुटांचीं निरांजनें तुझ्या चरणकमळांना ओंवाळीत असतात. तूं श्रेष्ठ शस्त्रास्त्रवेत्ता आहेस. तूं विमल आहेस. हे शंकर-नारायण स्वरूप परमेश्वरा तुला नमस्कार असो. ३३. तूं मदनारि मधुकैटभ राक्षसांचा नाश करणारा आहेस. तूं शंकर-नारायण सर्व जगाचें सारभूत तत्त्व आहेस. तुला नमस्कार असो. ३४. पर्वतराजकन्या पार्वती व जलाधिराजकन्या लक्ष्मी यांनीं आपल्या अखंड भक्तीनें तुझें मन वश केलें आहे. सूर्य, चंद्र व अग्नि हे तुझे नेत्र आहेत. हे शंकर–नारायण परमेश्वरा, तुला नमस्कार असो. ३५. भक्तीनें सतत नम्र असलेल्या तुझ्या भक्तांची कलिकालांतील सर्व पापें तूं स्वतः आपल्या हातांनीं दूर करतोस व त्यांना नरकांतून मुक्त करतोस. हे शंकर-नारायण देवा, तुला नमस्कार असो. ३६. भक्तीनें नम्र झालेल्या पांडवांचें तूं पराभवापासून रक्षण केलेंस. तूं देवशत्रु राक्षसांना नामशेष केलेंस. सर्व विश्वाचा तूं स्वामी आहेस. हे शंकर-नारायण परमेश्वरा, तुला नमस्कार असो. ३७.

---

१ कुंदापूर तालुक्यात ‘ शंकर–नारायण ’ देवस्थान व गांव असून तेथें एक विशाल जोडलिंग पाण्यांत आहे.

भूवारिवन्हिमरुदंबुदपुरुषार्कजैवारकाष्टवपुषे[1] दशविग्रहाय ।
ताराचराचरमयाय च शंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३८ ॥
कीनाशनक्रनिगृहीत[2]रटन्मृकंडुभूनागर्भातिहरपादकरांबुजाय ।
आराधिताय सकलैरपि शंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ३९ ॥
नानाविलासनगराजसुताप्रियाय भोगप्रियाय नरवाहनपुष्टिदाय ।
नाकं[3]प्रदाय नमतामतिशंकरश्रीनारायणाय विमलाय नमः शिवाय ॥ ४० ॥
जय शंकर पंकजनाभ विभो विभवप्रद पादकृपांबुनिधे ।
विधिपावकसेवित दैन्यहर हर माधव मानवमाररिपो ॥ ४१ ॥
रिपुदानवदारणचक्रधर[4] धरजापरिरंभणलोलभुजे[5] ।
भुजगाधिपकोमलभोगशये[6] शयशोभितशूलविशालगदे[7] ॥ ४२ ॥
गदभेषजचित्रविचित्रगुणे[8] गणनायकमानसतोषकरे[9] ।
करनीरजराजितश्रीकरे[10] वरदाभयदानविधानपदे[11] ॥ ४३ ॥
पदनम्रसुरासुरपूर्णकृपाकृपणाखिलकामनकल्पतरो ।
तरुणीमणिभूषितवामतनो तनुकांतिनिराकृतनीलमणे ॥ ४४ ॥
मणिमौलिविषकंठितचंद्रकल करवेणुरवोन्मदगोपिजन ।
जननादिविहीननिरजोदरवरे[12] कोटिविलासनिकासरूप* ४५
[13]रुचिरे नवकौस्तुभकंबुगले[14] गलक्षितकालमहाप्रलये[15] ।
गरलायुधमस्तकसंनटन पाटिताब्जभवांसघट ॥ ४६ ॥*
घटसंभवदत्तमहास्त[16]तते जगदीश रमेश रमेशभव ।
भवसागरतारककंवधनां धक्तिसांधरैककंधरद ॥ ४७ ॥*
रदनच्छदविधृतविद्रुमभद्रं मभयनगर ... ।
रदकेसरराजितपद्ममुख मुखरीकृतसद्गुणभाग्यनिधे ॥ ४८ ॥
विधिवन्द्य विधेहि पदं हृदये हृदयंगमकुंकुमलिप्तधर ।
धरजाकमलाकुचलोलकर कर[17]जार्दितनिर्दयदैत्यरते ॥ ४९ ॥

---

१ कोष्टवपुषो । २ तुग्रहीति० । ३ नाकदमाय । ४ धरा । ५ भुजा । ६ शया । ७ गदा । ८ गुणा । ९ करा । १० श्रीकरा । ११ पदा । १२ निरिदेरेदर । १३ रुचिरं । १४ गलं । १५ महापरल । १६ महास्तृतते । १७ तरजाद्रि०

पृथ्वी, जल, अग्नि, वायु, मेघ, पुरुष, सूर्य व चंद्र हीं तुझींच आठ शरीरें आहेत. तुझे दहा अवतार आहेत. नक्षत्रें व चराचर विश्व हीं सर्व तुझींच स्वरूपें आहेत. हे शंकर-नारायण देवा, तुला नमस्कार असो. ३८.

जेव्हां यमानें भृकंडूला व मगरानें गजेन्द्राला धरलें, तेव्हां त्यांनीं तुझाच धांवा केला. हे देवा, त्यावेळीं तूंच आपल्या करकमलांनीं त्यांचें रक्षण केलेंस. फार काय, सर्वच देवांनीं तुझी भक्ति केली आहे. हे शंकर-नारायण देवा, तुला नमस्कार असो. ३९.

विविधविलासरागिणी पार्वतीचा तूं प्रियकर आहेस. तूं भोगप्रिय देव कुबेराचें ऐश्वर्य वृद्धिंगत करणारा व स्वर्गदाता आहेस. भक्तांचें कल्याण करणाऱ्या शंकर-नारायण देवा, तुला नमस्कार असो. ४०.

हे शंकर–पद्मनाभ, तुझा विजय असो. सर्वव्यापी ऐश्वर्यदायक दयानिधि देवा, तुझा विजय असो. ब्रह्मदेव व अग्नि यांनींसुद्धां तुझी सेवा केली आहे. हे शंकरा, तूं दैन्य दूर करणारा देव आहेस. हे लक्ष्मीपते, तूं मानवांतील मदनाचा शत्रु आहेस. तुला नमस्कार असो. ४१.

राक्षसशत्रूंचा नाश करण्यासाठींच तूं आपल्या हातांत चक्र धारण केलें आहेस. गिरिजेला आलिंगन देण्यासाठीं तुझे हात नेहमीं तत्पर असतात. तुझ्या हातांत नागराजांचीं कोमल वलयें असतात. त्रिशूल व विशाल गदा हीं आयुधें नेहमीं तुझ्या हातांत शोभत असतात. हे शंकर-नारायण देवा, तुझा विजय असो. ४२.

विविध रोग दूर करणाऱ्या औषधांप्रमाणें तुझे गुण सर्व सांसारिक दुःखें दूर करणारे आहेत. तूं गणनायकाचें मन संतुष्ट करणारा आहेस. तुझ्या करकमलामध्यें नेहमींच लक्ष्मीकर शोभत आहे. तूं वरदाता व अभयदानदाता आहेस. हे शंकर-नारायण देवा, तुझा विजय असो. ४३.

तुझ्या चरणीं नम्र झालेल्या सुरासुरांवर तुझी पूर्ण कृपा असते. तूं उदार आहेस. सर्व इच्छा पूर्ण करणारा तूं कल्पतरु आहेस. तुझें वामांग युवतिरत्नानें शोभायमान झालें आहे, आणि तुझ्या शरीरकांतीसमोर नीलरत्नाचा रंगसुद्धां तुच्छ वाटतो. तुझा विजय असो. ४४.

तुझ्या रत्नखचित जटाभारावर चंद्रकला असून कंठांत हालाहल विष आहे. तुझ्या हातांतील वेणूच्या आवाजानें गोपीजन मोहित झाल्या. तूं जननादिरहित आहेस. तुझा विजय असो. ४५. कौस्तुभरत्न धारण केलेल्या तुझ्या शंखाकृति सुंदर कंठांत विषाच्या रूपानें महाप्रलय असल्याचा भास होत आहे. तूं अत्यंत विषारी अशा महासर्पाच्या फणांवर नृत्य करणारा आहेत. तूंच ब्रह्मदेवाचें पांचवें मस्तक छेदून टाकलेंस. तुझा विजय असो. ४६.

घटोद्भव अगस्तीला तूंच अनेक अस्त्रें दिलीं आहेस. हे जगदीश्वर लक्ष्मीपते, शंकर-नारायण देवा, तुझा विजय असो. ४७.

दांतांच्या किरणांनीं तुझें मुखकमल सुंदर दिसत आहे. तुझे अधरोष्ठ केसराप्रमाणें सुंदर आहेत. ब्रह्मदेवालाही तूं वन्दनीय आहेस. पार्वती व लक्ष्मी यांच्या वक्षःस्थळांवर तुझे जे करकमल विराजमान असतात, त्याच आपल्या हातांच्या नखांनी तूं हिरण्यकशिपूचें वक्षस्थळ फाडून टाकलेंस. हे शंकर-नारायणा, तूं माझ्या हृदयांत वास कर. ४८–४९.

पतितासममहानगवज्रनुते नुतिमुक्तिद वेदपुराणगुण ।*
गणनाविषयानघपुण्यगुण गुणवर्णनमतीव भूमिसुर ॥ ५० ॥
सुरभूरुहमूलल्लसद्भुवन भवनाशन भाविनमंगलदृग्गल मृदुलदिव्यतरो ।
प्रसवायुधतापनकृन्नयन नयनांबुजासाधितनक्रजय ॥ ५१ ॥
जय क्रोडीश गिरीश जय जय दिग्विजयी भव देव जय ॥
एवं स्तुत्वा तदा रामः कृतांजलिपुटः सुधीः । नत्वा स्तुत्वाथ तं देवं प्रतस्थे वारुणीं दिशम् ॥
तत्र शुक्तिमतीं दिव्यां विमलोदकपूरिताम् । मंदाकिनीप्रतिनिभामघौघपरिवर्जनीम् ॥ ५३ ॥
तां ददर्श महाभागस्तस्यां स्नातुं प्रचक्रमे । विधाय नित्यकर्माणि सोऽहं ब्रह्मेति भावयन्[१] ॥
मंत्रमूर्तिं हृदि ध्यायन्नांतरे खे जपन्नमूम्[२] । एतस्मिन्नंतरे [३]राजन्नाजग्मुरतिदुःखिताः ॥ ५५ ॥
विश्वस्ताः पूर्णगर्भिण्यः क्षुत्पिपासानु[४]पीडिताः । नदीकूलं ततः प्रापुर्नवसंख्या नवाकृति ॥५६॥
अविदूरे तपस्यंतं साक्षाद्वन्हिशिखोपमम् । कोटिभानुप्रतीकाशं नासाग्रकृतलोचनम् ॥ ५७ ॥
ददर्श भार्गवं हृष्टास्तस्यांतिकमुपाविशन् । पाहि पाहि महाबाहो सर्वभूतदयानिधे ॥ ५८ ॥
दुःखान्नस्तारय विभो ह्यंगभूतःपरस्परम् । उच्चैराक्रंदिताः प्रोचुः परप्रांतभुवस्थले* ॥ ५९ ॥
[५]त्वदीयाःस्मो वयं ब्रह्मन् निंदिताः पापदूषिताः । उद्धारय कृपांभोधे मृतप्राया हतप्रियाः ॥६०

शौनक उवाच –

किमेतदिति ह्याश्चर्यं विस्मयोत्फुल्ललोचनः । उद्धरन्निव नेत्राभ्यां ददर्श नृपनंदन ॥ ६१ ॥
पतंति भूतले धीराः पालनायातिदुखिताः । सहजं हि तदा तासां मन्दभाग्यमकीर्तयन्[६] ॥६२
अथ दत्वाभयं तेभ्यः कृपालुर्दीनवत्सलः । मेघगंभीरया वाचा ह्युवाच भृगुनंदनः ॥ ३३ ॥

भार्गव उवाच –

धैर्यमालंब्यतां नार्यः क्लेशं[७] संत्यज्यतामिति । अभिप्सितं वरं ब्रूत दत्तमित्यवधार्यताम् ॥ ६४ ॥
ततस्तद्वाक्यमाकर्ण्य सुधारसमिवोदितम् । उत्तस्थुरथ विश्वस्ता अश्रुपूरितलोचनाः ॥ ६५ ॥

नार्य ऊचुः –

द्वात्रिंशद्ग्राममध्ये तु श्रोत्रियान्वयिनो वयम् । बाल्ये भर्तुर्वियोगेन ललाटलिखितेन च ॥
इमामवस्थां संप्राप्ता जनैरतिविगर्हिताः । ग्राम[८]णीभिः परित्यक्तास्तपस्विन्योवे[९]यं बत ॥ ६७ ॥
देहं त्यक्तुमधैर्यत्वाद्गच्छामो नियतेर्वशात् । पुण्यलेशेन महता त्वद्दर्शनमभूद्विभो ॥ ६८ ॥
कृपां कुरु दयासिंधो नः पालय कृपाकर । इति तासां वचः श्रुत्वा दत्तवानभयं मुनिः ॥६९

---

१ भावयेत् । २ भेजपं नमुम् । ३ राजन् ना० । ४ पिपासेन पीडिताः । ५ त्वदयेत्यावयं
६ मदभायतकीर्त्तयेत् । ७ केशं । ८ ग्रामणीभ्यः । ९ स्विन्येवयं ।

तुला केवळ नमस्कार केला तर तूं भक्तांना मुक्ति देतोस! तुझे गुण वेदांत व पुराणांत वर्णिले आहेत. तुझ्या पवित्र गुणांची गणना करतां येत नाहीं. तुझ्या भवनांत कल्पवृक्ष आहे. तूं संसारताप दूर करणारा आहेस. दिव्यतरूच्या दर्शनानें भावी सर्व अशुभ संकटें नाश पावतात, त्याचप्रमाणें तुझ्या दर्शनानें भक्तांचीं सर्व संकटें दूर होतात. तूंच आपल्या नेत्राग्नीनें मदनाला दग्ध केलेंस. तूंच आपल्या नेत्रकमळानें मकरावर विजय मिळविलास. हे क्रोडीश्वर गिरिजावरा, तूं दिग्विजयी आहेस. तुझा जयजयकार असो. ५०–५१.

याप्रमाणें हात जोडून व देवाची स्तुति करून तो श्रेष्ठ बुद्धिमान भार्गवराम पश्चिमेकडे जाण्यास निघाला. ५२. तेथें त्याला स्वच्छ पाण्यानें परिपूर्ण असलेली व गंगेप्रमाणें पाप दूर करणारी शुक्तिमती नदी दिसली. म्हणून तो महाभाग भार्गवराम त्या नदींत स्नान करूं लागला. नित्यकर्मविधि आटोपल्यावर, तो 'मी ब्रह्म आहे', ही भावना ठेवून मंत्रार्थानुसार हृदयांत मूर्तीची प्रतिष्ठा करून तिचें ध्यान करूं लागला. हे राजा, इतक्यांत अत्यंत दुःखी, पूर्णगर्भवती, भूक व तृषा यांनीं पीडित अशा नऊ विधवा स्त्रिया त्याच नदीतटावर आल्या. त्यांना जवळच एक तपस्वी पुरुष दिसला. तो पुरुष प्रत्यक्ष अग्नीसारखा, कोट्यवधि सूर्याप्रमाणें तेजस्वी दिसत होता. त्यानें आपली दृष्टि नासाग्रभागीं स्थिर केली होती. त्या भार्गवमुनीला पाहून त्यांना आनंद झाला व त्याच्याजवळ जाऊन त्या म्हणाल्या, हे बाहुशाली पुरुषा, तूं प्राणिमात्रांचा दयासागर आहेस; म्हणून आमचें रक्षण कर, रक्षण कर. ५३–५८.

हे प्रभो, ह्या दुःखांतून आम्हांस मुक्त कर. आम्ही सर्वजणी येथें परस्थळीं आहों. याप्रमाणें त्या मोठ्यानें आक्रोश करूं लागल्या व पुनः म्हणाल्या, हे ब्रह्मन, आम्हीं निंदित व पापदूषित आहोंत; म्हणून तुझ्याजवळ आल्या आहोंत. आम्हाला पवित्र कर. आम्ही विधवा असल्यानें आमचें जीवन संपल्यासारखेंच आहे. हे कृपासागरा, आमचा उद्धार कर. ५९–६०.

शौनक म्हणाला, ह्या आकस्मिक प्रकारानें भार्गवाला आश्चर्य वाटलें; म्हणून त्यानें विस्फारलेल्या डोळ्यांनीं त्यांच्याकडे पाहिलें! हे नृपनंदना, जणुं तो आपल्या दृष्टीनेंच त्यांचा उद्धार करीत होता. ६१. त्याही स्त्रियांनीं दुःखानें व्याकूळ होऊन आपल्या रक्षणासाठीं भूतलावर लोळण घेतलें व सहज कळवळून त्या आपलें दुर्दैव सांगूं लागल्या. ६२. नंतर दयाळू व दीनवत्सल अशा भार्गवानें त्यांना मेघगंभीर वाणीनें अभय दिलें. ६३. भार्गव म्हणाला, धीर धरा. स्त्रियांनों, दुःख सोडून द्या व बोला. इच्छित वर मी दिलाच असें निश्चित समजा. त्याचें तें अमृतासारखें भाषण ऐकून त्यांना धीर आला. त्या उठून उभ्या राहिल्या. त्यांच्या डोळ्यांत अश्रू दाटले. ६४–६५. त्या म्हणाल्या, आम्ही बत्तीसग्रामवासी वैदिक घराण्यांतील स्त्रिया आहोंत. बालपणांतच ललाटलेखानुसार आम्हांस पतिविरह झाला, व आमची ही दशा झाली. लोकांनी आमची निर्भर्त्सना केली, व ग्रामप्रमुखांनीं आम्हांस गांवांतून घालवून दिलें. त्यामुळें आम्ही दीनदुबळ्या बनलों. ६६–६७. यासाठीं देहत्याग करण्याकरितां आम्ही निघालों! पण धैर्य होईना! पण नशिबामुळें व मोठ्या पूर्वपुण्याईनें, हे प्रभो, तुमचें दर्शन घडलें. ६८. दयासागरा, कृपा करा. हे कृपाळू पुरुषा, आमचें रक्षण करा. याप्रमाणें त्यांचें भाषण ऐकून मुनीनें त्यांना पुनः अभयदान दिलें. ६९.

ताभिश्च सह संप्राप्तः क्रोडेशं भद्रदायकम् । दर्शनं कारयामास यथा भक्तिर्भविष्यति ॥७०॥
क्रियतामत्र संवासं किंचित्कालमतंद्रिताः । क्रमाच्छंकरो नाथो वो देवः करुणानिधिः ॥७१॥
शं तनोति न संदेहो भविता कुलदैवतम् । एवमुक्त्वा महायोगी गोकर्णं प्रययौ तदा ॥७२॥
शौनक उवाच –
किंकरजनहितकरणं संततिकरणं शिवेंदिरारमणम् ॥ पंकजवन्नूतनचरणं शंकरनारायणं सदा कलये ॥ ७३ ॥

इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखण्डे शिवगणेशसंवादे भार्गवेण कृता स्तुतिर्नाम नवमोऽध्यायः ॥ ९ ॥

# अथ दशमोऽध्यायः ।

## पंचग्रामनिर्णयः ।

शतानीक उवाच –
किं चेक्रुरथ विप्रेंद्र गर्भेणार्ता नितांततः । विस्तरेण वदस्वाद्य पंचग्राममभूत्कथम् ॥ १ ॥
शौनक उवाच –
संक्षेपेणात्र वक्ष्यामि शृणु पार्थिवसत्तम । भार्गवस्य प्रभावं च पंचग्रामस्य वैभवम् ॥ २ ॥
सूतिमासश्च संप्राप्तः शुचिवस्त्रादनंतरम् । निर्भीतास्ताश्च विश्वस्ताः सुतान्सुषुविरे तदा ॥ ३ ॥
क्रमात्कन्याश्च संजाताः पीनोन्नतपयोधराः । संतोषमतुलं प्रापुः पप्रच्छुस्ता नृपोत्तम ॥ ४ ॥
तासां व्यतीयुर्बालत्वं तथा कौमारवार्धकम् । गोलका इति तान् प्राहुस्ततश्च मनुजेश्वर ॥ ५ ॥
स्वोदरभरणार्थाय चेतश्चक्रुरघौघगाः । केचिज्जनाः कर्षणं च लांगलं च क्वचिज्जनाः ॥ ६ ॥
केचित्प्रापुर्भारविद्यां केचित्कुर्वंति भट्टिकाम् । जघन्यजत्वं प्रज्ञाय किं ब्रूमस्त्वां नरेश्वर ॥ ७ ॥
वृत्या विवर्णा वैधेयाः पशवस्ते निराकृताः । नेतृहीना यथा सेना यथेच्छं विचरंति हि ॥ ८ ॥
इत्थं प्रवर्तमानानां व्यतीयुर्बहुवत्सराः । भार्गवः कृतगोकर्णस्तथा तौलवमंडनम् ॥ ९ ॥
महेंद्रं गंतुकामः स प्रपेदे क्रोडपत्तनम् । ततोऽदूरे समायातं भास्करेण समद्युतिम् ॥ १० ॥
तं दृष्ट्वा भार्गवं वध्वः पेतुश्चरणयोस्तथा । तथोत्थाय स्ववृत्तांतमुक्त्वाखंडं पुनः पुनः ॥ ११ ॥
एताः क्षेत्रमहाभाग त्राहि नैः पापचारिणीः । तदाकर्ण्य वचस्तासां कृपालुर्भृगुनंदनः ॥१२॥
कृपां चकार कृपया पालयन्निव भूमिप । तथेत्याह महाबाहुरग्नीध्रं सोमपीथिनम् ॥ १३ ॥
वेदवेदांगतत्त्वज्ञं स्मार्त्तकर्मसुनिष्ठितम् । अंगज्ञ च महाप्राज्ञं पश्चिमाब्धौ तटे स्थितम् ॥१४॥
संस्कारः क्रियतामद्य त्वया चैनसकारिणाम् । अवैदिकेन मंत्रेण नामग्रहणपूर्वकम् ॥ १५ ॥
स्थानं कुरु तथा तेभ्यस्तत्र निक्षिप्यतामिति । कुठारपाणिरित्युक्त्वा महेंद्रमगमत्तदा ॥ १६ ॥

---

१ शंकरन्यायेन तं । २ चक्रु रथ । ३ गर्भिण्यार्तानितांतव । ४ निर्मिता । ५ तेषान्यती० । ६ वार्षिकं । ७ ततश्चेन्मनु० । ८ सोदरा । ९ विवर्णान् वैधायान् पशूनास्ता निराकृतान् । १० प्रवृत्तमानस्य । ११ कामेन । १२ नः । १३ पीठनं ।

त्यांना बरोबर घेऊन भार्गवराम कल्याणकारी क्रोडेश देवाजवळ आला. त्यानें त्यांना देवाचें दर्शन घडविलें व म्हटलें तुमची जशी भक्ति असेल त्याप्रमाणें होईल. ७०.

आळस सोडून तुम्ही येथें रहा. म्हणजे क्रमानें दयानिधि देव शंकर तुमचें निश्चित कल्याण करील, व हेंच तुमचें कुलदैवत होईल. असें बोलून महायोगी भार्गवानें गोकर्णाकडे प्रयाण केलें. ७१–७२. शौनक म्हणाला, कमलचरण पार्वतीपति शंकर व लक्ष्मीपति नारायण हे दोन्ही देव भक्तजनांचें कल्याण करणारे व संतति देणारे आहेत, असें मी समजतों. ७३.

# अध्याय १० वा

## पंचग्राम–निर्णय

शतानिकानें प्रश्न केला, हे द्विजश्रेष्ठा, नंतर त्या गर्भपीडित स्त्रियांनीं काय केलें ? पंचग्राम मंडळ कसें निर्माण झालें ? हें सर्व आज विस्तारपूर्वक सांगा. १.

शौनक म्हणाला, हे राजश्रेष्ठा, भार्गवाचा प्रभाव व पंचग्रामांचें वैभव थोडक्यांत सांगतों ऐक. २. प्रसूतिमास जवळ आला, तेव्हां त्या विधवा स्त्रियांनीं शुद्ध वस्त्र धारण केलें व निःशंक होऊन प्रथम पुत्ररत्नांना जन्म दिला. ३. पुढें त्यांना मुलीही झाल्या. त्या पुष्ट व उन्नतपयोधर होत्या. यामुळें त्यांना अत्यानंद झाला व राजश्रेष्ठा, त्यांनीं एकमेकांची विचारपूस करणें चालू ठेवलें. ४. त्या बालकांचें बाल्य व कौमार्य मागें पडून त्यांनीं तारुण्यांत पदार्पण केलें हे राजा, लोक त्यांना गोलक म्हणूं लागले. ५. त्यांना ( जीवनासाठीं ) अनेक संकटांतून जावें लागलें. म्हणून त्यांनीं उदरभरणासाठीं कांहींतरी व्यवसाय करण्याचें ठरविलें. त्यांपैकीं कित्येक जणांनीं, वाहन ओढणें, शेत नांगरणें, ओझीं वाहणें, भाटगिरी करणें इत्यादि कामें करण्यास सुरवात केली. हे राजा, आम्ही तुला अधिक काय सांगणार ? थोडक्यांत, ते सर्व वृत्तीनें ब्राह्मणादि कोणत्याही वर्णाचे नसलेले, अडाणी, चहाडखोर व बहिष्कृत झाले. सेनानी-रहित सैन्याप्रमाणें ते यथेच्छ भटके बनले. ६–८.

अशा ह्या त्यांच्या स्थितींत पुष्कळ वर्षें निघून गेलीं. नंतर गोकर्णयात्रा करून महेंद्र पर्वताकडे जातांना भार्गवराम तौलवदेशभूषण असलेल्या क्रोडनगरांत पोंचला. त्यावेळीं सूर्या-सारख्या त्या तेजस्वी भार्गवाला जवळून पाहून त्या स्त्रिया त्याच्या पायां पडल्या व उठून त्यांनीं त्याला आपला सर्व वृत्तांत सांगितला. ९–११. त्या म्हणाल्या, हे क्षेत्रस्थ भाग्यशाली पुरुषा, आम्हां पापी लोकांचें रक्षण कर. तें त्यांचें भाषण ऐकून भार्गवाला त्यांची दया येऊन पालन केल्यासारखा धीर दिला व ठीक आहे असें बोलून तो बाहुशाली पुरुष तेथील यज्ञऋत्विजा सोमयाजी वेदवेदांगतत्त्ववेत्ता, स्मार्तकर्मांत प्रतिष्ठा पावलेला, वेदांगज्ञ व महाबुद्धिमान् अशा, समुद्राच्या किनारीं राहणाऱ्या एका ब्राह्मणाला म्हणाला, या पापाचरणी लोकांवर नामग्रहणपूर्वक अवैदिक मंत्रांनीं संस्कार करा. १२–१५. यांच्यासाठीं स्वतंत्र स्थानाची योजना करून तेथें यांना ठेवा. असें बोलून परशुराम महेंद्र पर्वताकडे गेला. १६.

शौनक उवाच –

गुरुवाक्यमथाकर्ण्य सोमपीठिर्महामतिः । गोलकान्तान्समाहूय मंत्रपूतैर्जलैरपि ॥ १७ ॥
मृत्स्नानं भस्मस्नानं च तथा शुक्तिमतीजलैः । विधिवत्स्नापयामास गुरुवाक्यं सुगौरवम् ॥
नवानां नवपुत्राणां नव नामान्यकारयन् । गासीलयः कंनतं च वैद्यवच्चानिचातरः ॥ १९ ॥*
हेरंबारयेलेदालश्च नवैकेर्यपालकः । कोउगीहेम्णकल्कूरा पश्चात्संभावता भवान् ॥ २० ॥*
चौलोपनीतिकर्माणि तथोद्वाहानि यानि च । लौकिकोक्तेन मार्गेण चक्रुर्वै भूसुरादयः ॥२१॥
कार्याकार्यविचारज्ञो नातिक्रम्य[1] गुरोर्गिरः[2] । ग्रामं कुत्र करिष्येऽहमिति चिंतापरोऽभवत् ॥२२॥
एतस्मिन्नंतरे राजन् व्योम्नि गीः समपद्यत । अत्रैव[3] कारयस्वेति विस्मयं विस्मयावहम् ॥२३
ततस्तद्वाक्यमाकर्ण्य स विप्रेंद्रो मुदान्वितः । उपत्यकायां क्रोडाद्रेः[4] सह्यशैलस्य पश्चिमे ॥ २४
उत्तरे क्रियते सीमा याम्ये सह्यसमुद्भवा । सितानाम नदी पुण्या वर्तते विमलोदका ॥ २५ ॥
क्रोडाद्रीशभागे तु शुक्तिमत्याश्च पश्चिमे । कृशब्दात्परतः पारुशब्दग्रामं चकार सः ॥ २६ ॥
तत्रास्ते भगवान् शंभुपुत्रो गजमुखः सदा । शंखचक्रगदाशार्ङ्गपाणिना सह विघ्नराट् ॥ २७ ॥
तस्य चोत्तरदिग्भागे कारवेलति विश्रुतः । राजते तत्र देवेशः शार्ङ्गपाणिश्चतुर्भुजः ॥ २८ ॥
अत एव[6] स्वभक्तानां वांच्छितार्थप्रदायकः । तस्य पश्चिमदिग्भागे वामनेति च विश्रुता ॥ २९ ॥
तत्रास्ते भगवान्साक्षादसुरांतकरो विभुः । अनारतं हि सुखकृत् भक्तानामभयप्रदः ॥ ३० ॥
शुक्तिमत्याः पुरोभागे उलूनामेति विश्रुता । करोति तत्र सान्निध्यं देवी भगवती हि सा ॥३१
महिषासुरनिर्नाशकारिणी चंडदर्पहा । चापशूलगदाखड्गधारिणी जगदंबिका ॥ ३२ ॥
तत्रैव पुंडरीकाक्षः प्रभुः सर्वत्र गोचरः । सर्वदा वामभागस्थो लक्ष्मीसंश्लिष्टविग्रहः ॥ ३३ ॥
कपित्थानात्र त्रिषगैः पुरारद्रेन धीमता । स्थापितोऽभून्महालिंगं चराचरसुखप्रदम् ॥ ३४ ॥*
अद्यापि लिंगरूपेण दृश्यते दृष्टिगोचरः । एवं च पंच ग्रामान्सः कारयित्वा द्विजाग्रणीः ॥ ३५ ॥
एकस्मिन्नेकैमाज्ञाप्य तथैवाष्टौ जनांस्तथा । उभावुभौ पृथग्ग्रामे न्यर्धत्तेति ततो नरान् ॥३६॥
सुखेन स्थीयतामत्र यावच्चंद्रदिवाकरौ । भार्गवस्य प्रसादेन तावत्तिष्ठंतु बालकाः ॥ ३७ ॥
अत्रिगोत्राणि युष्माकं वर्धतां कृपया विभोः । इत्याशीर्वादमाकांक्षद्भिर्नुतः सद्विजोत्तमः[10] ॥३८
भूयो भूयो नमस्कृत्य क्रोडेशाय महात्मने । गुरवे भार्गवायाथ प्रययौ स्वाश्रमं प्रति ॥ ३९ ॥

शौनक उवाच –

ततः कालांतरे राजन् नदीमारुरुहुः[11] क्वचित् । तत्र वाटं प्रकुर्वन्ति[12] पिंडभृत्कुकुरो[13] यथा ॥४०॥
अधित्यकायां सह्याद्रेः पूगीवाटं न संशयः । उपत्यकायामेतेषां लांगलत्वं विधीयते[14] ॥४१॥
एतेषां गोलकानां च वाटिका च प्रशस्यते । अथवा भारविद्यां च सेवावृत्तिस्तथैव च ॥४२॥
पंचग्रामजना मूढाः कर्महीना निराकृताः । तेषां माता ब्राह्मणीका राजते राजशेखर ॥४३ ॥
सहभोज्यं सहावासं सहसंभाषणं तथा । सहयात्राप्रयाणं च न चेत्याहुर्विचक्षणाः ॥ ४४ ॥

---

१ कर्म्य । २ गिरां । ३ अत्रेयं । ४ कोपाद्रेः । ५ पर्वते । ६ अतिवर्चे । ७ न्नेव
८ न्यधायीत । ९ तिष्ठंति । १० सिद्धयोत्तमः । ११ रुरुहः । १२ कुर्वेती । १३ कुररो ।
१४ विधार्यते ।

शौनक म्हणाला, नंतर त्या विद्वान् ब्राह्मणांना बोलावून मंतरलेल्या पवित्र पाण्यानें त्यांना मृत्तिकास्नान व भस्मस्नान घालून शुक्तिमतीच्या पाण्यांत त्यांना स्नान करण्यास लावलें. अशा रीतीनें त्यानें गुरुवाक्य आदरानें पाळलें. १७–१८. नंतर त्या नऊ पुत्रांचा नामकरणविधि केल्यावर उपनयन, विवाह इत्यादि त्यांचे संस्कारही त्या ब्राह्मणांनीं लौकिक पद्धतीनें केले. १९–२१. तो ब्राह्मण कार्य व अकार्यही जाणत होता. म्हणून गुरूची आज्ञा पूर्ण करण्यासाठीं 'नवीन गांव कोठें निर्माण करावा' अशा विचारांत तो पडला. २२.

इतक्यांत, हे राजा, 'येथेंच स्थान निर्माण कर.' अशी आकाशवाणी झाली. ही आश्चर्यकारक आकाशवाणी ऐकून तो ब्राह्मणश्रेष्ठ आनंदित झाला. क्रोडाद्रीच्या पायथ्यालाच सह्याद्रीच्या पश्चिमेस व उत्तरेस सीमा निश्चित केली. दक्षिणेस सह्य पर्वतावर उगम पावलेली सीता नदी ही सीमा ठरविली. २३–२५.

अशा रीतीनें क्रोडाद्रीच्या ईशान्येस व शुक्तिमती नदीच्या पश्चिमेस 'कृपारू' ग्राम निर्माण केला. २६. तेथें शंख-चक्र-गदाधारी विष्णूसह विघ्नराज शंभुपुत्र भगवान् गजानन आहे. २७. त्याच्या उत्तरेला 'कारवेल' गांव असून तेथें भक्तांची इच्छा पूर्ण करणारा चतुर्भुज भगवान् कृष्ण आहे. त्या गांवाच्या पश्चिमेला 'वामना' नांवाची प्रसिद्ध नदी आहे. २८–२९.

तेथें असुरान्तकारी साक्षात् भगवान् ईश्वर आहे. तो सतत भक्तांना सुख व अभय देणारा आहे. ३०. शुक्तिमतीच्या पूर्वेस उलू नांवाची प्रसिद्ध भगवती देवी आहे. ३१. त्या महिषासुरमर्दिनी चाप – शूल – गदा – खड्गधारिणी जगन्माता देवीनें चंडासुराचा वध केला होता. ३२. तेथेंच सर्वत्र साक्षात्कार असलेला कमलनेत्र प्रभु विष्णु असून त्याच्या शेजारीं लक्ष्मी आहे. ३३. तो भगवान् अद्याप लिंगरूपानें सर्वांना प्रत्यक्ष दिसतो. अशा रीतीनें त्या श्रेष्ठ ब्राह्मणानें पांच गांवें निर्माण करून त्यापैकीं प्रमुख गांव एका मुलाला देऊन, त्या गांवाच्या उभय बाजूला असलेल्या दोन दोन अशा चार गांवांत आठ जणांना ठेवलें; ३६. व तो त्यांना म्हणाला, मुलांनों, चंद्रसूर्य असेपर्यंत तुम्ही येथें रहा. तुमच्यावर भार्गवाची कृपा आहे. प्रभुकृपेनें तुमचे अत्रिगोत्र वृद्धिंगत होवो! असा त्यानें त्यांना आशीर्वाद दिला, व त्यांनींही त्याला प्रणाम केल्यावर तो ब्राह्मणोत्तम क्रोडेश्वराला व भार्गवगुरूला पुनः पुनः नमस्कार करून आपल्या आश्रमाकडे गेला. ३७–३९.

शौनक म्हणाला, हे राजा, कालांतरानें अन्नार्थी कुरर पक्ष्याप्रमाणें ते बागाईत निर्माण करीत करीत नदीपर्यंत पोंचले. ४०. अशा रीतीनें ते सह्याद्रीच्या पठारावर सुपारीबाग व पायथ्याला शेती करूं लागले. ४१. या गोलकांना बाग करणें, ओझें वाहणें व सेवावृत्ति करणें हींच कामें प्रशस्त होत. हे पंचग्रामजन मूढ, कर्महीन व बहिष्कृत होत. त्यांच्या ब्राह्मण मातेनेंही त्यांच्यासह राहावें. ४२–४३. त्यांच्याशीं सहभोजन, सहवास, सहसंभाषण व सहप्रवासही करूं नये, असें विद्वान् लोकांनीं सांगितलें आहे. ४४.

तेषामन्नं प्रभुंजानो पातित्यमनुगच्छति । अग्निहोत्रं च संन्यासं पौरोहित्यं तथैव च ॥ ४५ ॥
श्रौतस्मार्ते कर्मणी च पुराणपठनं तथा । स्वयंभूलिंगसंस्पर्शस्तांतांत्रिकत्वं तथैव च ॥ ४६ ॥
यमाद्यष्टांगयोगत्वं नेत्याहुर्भृगुनंदनः । न चैते गोलका वृंत्या विवर्णाश्च निराकृताः ॥ ४७ ॥
विप्रत्वमनुगच्छंतः प्रचरंतु कलौ युगे । बहुनात्र किमुक्तेन किमन्यच्छ्रोतुमिच्छसि ॥ ४८ ॥
एतेषां दर्शनात्पुंसां पातित्यं संभविष्यति । प्रायश्चित्तविधिं वक्ष्ये मार्तंडस्य विलोकनम् ॥ ४९
गणेश्वरं विष्णुमनादिशून्यं विष्णुं तथा विष्णुमुदारविक्रमम् ।
देवीमुपेंद्रं च महेंद्रलिंगं नमामि भूयः प्रणमामि भूयः ॥ ५० ॥
इति श्रीस्कंदपुराणे उत्तररहस्ये सह्याद्रिखंडे पातित्यग्रामे पंचग्रामनिर्णयो नाम दशमोऽध्यायः ॥

# अथ एकादशोऽध्यायः ।

## पातित्यग्रामः ।

शौनक उवाच –

पातित्यग्राममस्त्यन्यच्छुक्तिमत्याश्च दक्षिणे । शूद्रदत्तं द्विजेभ्यश्च वाहकेभ्यः स्ववाहनम् ॥ १ ॥
पुरा तु पादजौ कौचिद् माद्वकंदेति विश्रुतौ । रूपयौवनसंपन्नौ महाबलपराक्रमौ ॥ २ ॥
शिवपूजापरौ निष्ठौ द्विजभक्तिपरायणौ । तयोस्तु कतिचित्काला[३] व्यतीयुर्नृपनंदन ॥ ३ ॥
द्वात्रिंशद्ग्रामनिलयाः श्रेष्ठा वेदविदां वराः । अष्टौ द्विजाः समायाताः सभार्याः सहपुत्रकाः ॥
तौ[४] वदंति समाकर्ण्य निर्भाग्या[५] धनलोभर्तः[६] । तयोः समीपमाजग्मुदारिद्र्यविनिवृत्तये[७] ॥ ५ ॥
आशीर्वादं ततः कृत्वा समवेता द्विजाधमाः । आशापूर्वकवाक्यानि ह्यूचुस्ते धनलोलुपाः ॥६॥
युवां धीरौ युवामाढ्यौ युवां पूज्यौ जगत्त्रये । भवद्भ्यां[८] सदृशौ नास्ति रूपौदार्यगुणान्वितौ ॥
स्तुतिमित्थं बहुविधैर्वाक्यैर्वाक्यविशारदैः । समागतानामालोक्य ज्येष्ठो धर्मपरायणः ॥ ८ ॥
विधिवत् पूजयामास स तेभ्यो द्रविणं बहु । तथाष्टौ सत्कुटुंबिभ्यः कृत्वा सद्मानि शूद्रजः ॥ ९ ॥
तदा सर्वसमृद्धानि पशुधान्यानि यानि च । दासीजनयुतान्याशु ददौ तेभ्यो मुदान्वितः ॥ १० ॥
तेन सन्मानिता विप्रा वासं चक्रुरतंद्रिताः । शुश्रूषां तस्य कुर्वंतो निन्युर्द्वादश हायनाः ॥ ११ ॥
जघन्यजोऽर्थं[१०] संचिंत्य पुत्रहीनाश्च मेंऽगनाः । अन्यां सुलोचनां प्राप्स्ये पीनोन्नतपयोधराम् ॥
रूपयौवनसंपन्नां सर्वलक्षणलक्षिताम् । अस्मत्संततिवृध्यर्थं वृणेऽहं वनितां शुभाम् ॥ १३ ॥
नापुत्रस्य च लोकोऽस्तीत्याहुर्मतिमतां वराः । इति निर्धार्य मनसा विवाहे कृतनिश्चयः ॥१४॥
आमंत्र्य बांधवैः सार्धमुक्तवान्स मनोरथान् ।

१ वृत्त्यो । २ पाद जैकश्चित्मद्वकंदेति । ३ कालो । ४ तं । ५ निर्भाग्यो । ६ लोभया ।
७ दरिद्रविनिवृत्तयः । ८ भवन्तः । ९ युता ह्याशु । १० जघन्यजोस्य ।

